THE
KĀSHI SANSKRIT SERIES
( HARIDĀS SANSKRIT GRANTHAMĀLĀ )
NO. 97.
( Karmakanda Section No. 10 )

THE

# S'RAUTASŪTRA

OF

# Latyayana

( ENDING WITH AGNISṬŌMA CHAPTER )

*Edited with*

AN ORIGINAL COMMENTARY CALLED

**SARALĀ & NOTES**

By

MAHAMAHOPADHYAYA

**PANDIT MUKUNDA JHA BAKSHI**

JAIKRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series office,*
*Benares City.*

1932.

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिजपुस्तकमालायाः

९७

कर्मकाण्डविभागे (१०) दशमं पुष्पम् ।


॥ श्रीः ॥

( सामवेदीयं )

# श्रौतसूत्रम्

## श्रीमन्महर्षि–लाट्यायनप्रणीतमग्निष्टोमान्तम् ।


अधिमिथिलं–दरभङ्गामण्डलान्तर्गत–हाटीतप्पान्तर्गत ( ढङ्गा- ) हरिपुर–ग्रामवासि–

कर्म्महार कुलालङ्कार नन्दलालशर्म्म–तनुजन्मना उपाध्यायोपनामकेन वख्शी

म. म. पं० श्रीमुकुन्दशर्म्मणा सङ्कलितया प्राक्तनभाष्यानुसृतया


सरलाख्यया व्याख्यया

संवलितम् ।


प्रकाशकः—

जयकृष्णदास–हरिदास गुप्तः—

चौखम्बा–संस्कृत–सीरिज़ आफिस,

बनारस सिटी ।

१९८९

# भूमिका

समुपजोषमेषा लाट्यायनीया श्रौतसूत्रवृत्तिः समुपलब्धस्वामिभाष्य-राजमार्गमनुसरन्ती द्राह्यायणीयन्धन्विदीपमपि क्वचित्क्वचिन्निगूढाभिसन्धिगाढान्धकारस्थले समुपाददाना भविष्यति साम्प्रतिकानां सुकुमारमतीनामन्तेवसतां महोपकारायेति-विहारोत्कलसंस्कृतशिक्षाध्यक्षप्रमुखैर्विद्वत्प्रकाण्डैस्सबहुमानमादिष्टो यथामति विलिख्यैनां "गवर्निङ्बडी"ति समाख्यायामुक्तप्रान्तीयसम्राट्प्रतिनिध्यनुमतायां विद्वत्समितौ कर्म्मकाण्डाचार्यपरीक्षायां विकल्पविधया निर्दिष्टस्य प्रपाठकद्वयस्य तावल्लाट्यायनीयश्रौतसूत्रस्य सरलाख्यां वृत्तिं समर्पितवान्पुरस्कृतश्च राजकीयैरध्यक्षवर्यैराजतीभिः पञ्चसप्तत्या मुद्राभिः।

तथाविधामेनां लोकोपकृतये मुद्रापयित्वा प्रकाशयितुं वाराणसेय-चौखम्बाप्रकोष्ठान्तर्गत-विद्याविलास-मुद्रायन्त्रालयाध्यक्ष-श्रीमज्जयकृष्णदास-हरिदास-गुप्तमहोदयाय तदर्थनया समर्प्य तद्यत्नेन लोकोपकृतिसक्षणामापादितामेनामाकलय्य बाढम्प्रमोदमानो शीशकाक्षरयोजकदोषेणोपनतं निजसंशोधनकार्यपरिश्रितं दोषलेशं-सकृपं विचार्य्य संशोधनेन व्यपोहितुं प्रेक्षावतोऽध्यापकाननुरुणध्मि यथैषा तोषाय भवेत्पिपठिषूणामन्तेवसतामिति।

सर्वथा चास्याः पुनः प्रकाशनेऽधिकार उक्तनाम्नोगुप्तमहोदयस्येति सप्रमोदमावेदयामि। आशंसामि चास्या लोके समादरेऽग्रिमस्यापि ला० श्रौ० सूत्रस्यैवं भूतां सरलां वृत्तिं विलिख्यास्मै पूर्ववत्समर्पयितुमिति प्रतिजानीते।

विदुषामाश्रवो वख्शी-

**म० म० श्रीमुकुन्दझा शर्म्मा**

हरिपुरीयः।

महामहोपाध्याय

पं० श्रीमुकुन्दझा बख्शी

मिथिलामहीमण्डन–भूसुरवर–नन्दलालगर्म्मतनुजन्मा
कर्म्मकाण्डभूषण–करमहाकुलकमलदिवाकरः
दरभङ्गामण्डलान्तर्गत( ढङ्गा )हरिपुरग्राम-
निवासी मैथिलः ।

# * अथ समर्पणम् *

आसीदशेषगुणधामयथाभिधानकर्माऽवदातकुल-गोकुलनाथशर्म्मा ॥
योभूपतीन्द्रमिथिलेशरमेशवंश्यान्पञ्चापि सम्परिचचार नरेन्द्र(१)मुख्यान् ॥ १ ॥
सोऽयं पितामह(२) इवातिवया बलादिभीमात्मजस्य तनयोनयतोपितेशः ॥
ज्येष्ठेन(३) सर्वगुणतः सहजेन सार्द्धं म्लेच्छाञ्जिगाय मिथिलेशबलाधिनाथः ॥ २ ॥
तस्यात्मजोऽभवदुरुक्रमपादसेवी तातानुरूपसह(४)जद्वयभाक्सनाथः ॥
येऽनाथ वेदमितसत्तनयेन वंशस्स्वोऽकारि धर्मधिषणेन मुहुः सनाथः(५) ॥ ३ ॥
तस्यात्मजेषु महितोऽहितसूदनोऽभूद्भोलादिनाथशुभनामधरस्तृतीयः ॥
योदानभोगरतभूपमहेश(६)सेवालब्धाधिकार्द्धिरथ पञ्च सुतानलब्ध ॥ ४ ॥
तस्यात्मजेष्वपि तृतीयतमोममाभूत्तातोनतोहरिपदे विजितारिवर्गः ॥
योनन्दलालपदभागपि सद्गुणौघैर्नाम्ना स्वकेन मुशलीति प्रसिद्धिमार्च्छत् ॥ ५ ॥
सोऽहन्तदीयसुकृतेन मतेन चैव श्रीभूपतीन्द्रमिथिलेशसुधन्यनाम्नः ॥
लक्ष्मीश्वरस्य कृपयाप्तमतिः सुपुष्टः शब्दादिशास्त्रनिवहेष्वभवं प्रगल्भः ॥ ६ ॥
तस्याथ भूपरिवृढस्य मता स्वधर्मनिष्ठा गुणैरपि पतिव्रतधर्म्ममूर्त्तिः ॥
ज्येष्ठा वनीपकहिता महिताऽतिविज्ञैर्लक्ष्मीवतीति प्रथिता महिला बभूव ॥ ७ ॥
या स्वृद्धराज्यसुखभोगपरा पुराऽभूत्कालेन तत्तृणमिवागणयत्प्रबुद्धा ॥
संश्रुत्य सन्मुखविनिर्गतधर्म्मसंस्था-संस्थापकानि निखिलानि श्रुतिस्थितानि॥८॥
शास्त्राणि, कर्मसु रता विधवोचितेषु कामैरनाहृतमना भवभीतिशान्त्यै ॥
श्रीकाशिकामधिवसत्यभयन्ददाना संसेविता बहुसमा मयका जनेभ्यः(७) ॥ ९ ॥
तत्प्रीतये कृतिरियं मम वैदिकानां सत्कर्म्मणाम्प्रकृतिभूतसवस्य सूत्रे ॥
लाट्यायनीय इह सद्विवृतिः परीक्ष्य शिष्यार्थिता भवतु लोकहिताय भूयः ॥१०॥

इति शुभम् । सन् १३४० साल ॥

---

(१) महाराजनरेन्द्रसिंहः मुख्यः बलाधिकम्लेच्छसम्राड्विजयेन प्रसिद्धोयेषु तान् । अयमर्थः । नरेन्द्रसिंहात् पुरातनौ राघवसिंह-विष्णुसिंहौ पश्चात्तनौ च प्रतापसिंह-माधवसिंहौ इति पञ्च महाराजान्सम्यगसौ परिचरितवान् । एतेन षष्ठस्य महाराजच्छत्रसिंहबहादुरस्य समयेऽप्ययमासीदेव । किन्तु राजसेवातः स्वयंविमनाः (उदस्तचित्तः) सन्नधिनिजगृहमध्युवासेत्याख्यानकमस्मत्कृताया "खण्डवलाकुल-प्रशस्तौ"तत्प्रतिच्छायभूते मिथिलाभाषानिबद्धे "खण्डवलाकुलेतिहासे-"च द्रष्टव्यम् ।

(२) पितामहोऽस्य बलभीम-(बल्म्ही)-शर्म्मा षोडशाधिकशतवर्षवया बभूवायमपि त्रयोदशाधिकशतवर्षवयाः समभवत् । पक्षे पितामहोभीष्मः स चातिवयाः प्रसिद्ध एव ।

(३) "बक्सी उमानायझा" इति नाम्ना प्रसिद्धेन सार्द्धं म्लेच्छान् "काबुल"-देशीयान्पातिसाहमहम्मदसाहप्रतिभटान् ।

(४) अस्य सहजौ द्वावपि पितृसमानबलौ, तत्र धैर्य्यनाथशर्म्मा ज्येष्ठः । कनिष्ठश्चास्य-प्राणनाथ शर्म्मेति बोध्यम् ।

(५) कृतार्थः ।

(६) मिथिलेश-महाराज-महेश्वरसिंह-वीरविक्रान्तस्यसेवया लब्धविभवः ।

(७) जनेभ्योऽभयन्ददानेत्यन्वयः ।

## अथात्रमन्त्रविनियोगसङ्ग्रहस्ताण्ड्ये—

ब्राह्मणप्रथमाध्याये मन्त्राणां विनियोजनम्।
अत्रादौ वृत उद्गाता "महदि"त्यादिकञ्जपेत्॥ १॥
"देवो"गृहाद्विनिर्गत्य दूरङ्गत्वा "विहा"जपेत्।
यागभूम्यन्तिके"वद्वा""पितरः"पित्रुपस्थितिम्॥ २॥
"नृम"यूपोच्छ्रितौ मन्त्रो"मृदा" वेद्याक्रमे जपेत्।
रराटीस्पर्शनं "विष्णो" हविर्द्धान-"मिपे"-विशेत्॥ ३॥
नवात्र मन्त्राः*प्रथमे खण्डे* सम्यगुदीरिताः।
"युन"-बाहून्नयेत्सोमे "ऋतस्ये" त्युपवेशनम्॥ ४॥
"ऋतं" स्पृशेद्द्रोणकुम्भं "वान" प्रोहेदमुम्पुरः।
"मरु""ग्रावः" स्पृशेदेषु द्रोणस्याभ्यूहनं "त्विदम्" ॥ ५॥
मृज्यादृस्रा"द्रुस" द्रोणं"पवि" द्रोणे पटं क्षिपेत्।
"पशु"-धाराञ्जपेदत्र(१) नव मन्त्रा उदीरिताः॥ ६॥
कुर्युः प्रवृतहोमौ द्वौ "वेकु" सूर्य" इति द्वयात्।
तृणाऽपसरणं"योऽद्य" "योम" स्यादुपवेशनम्॥ ७॥
"अग्ने"-रिति स्तोमयोगो "ब्रह्ममन्त्रं" जपेद्द्वयम्।
स्वामिनं वाचयेच्छयेनं "सर्व्वँचसा" प्रेक्ष्य जपेत्॥ ८॥
उपस्थानं "नमः" सूर्यं दश मन्त्रा इहे(२)रिताः।
"अध्वा"ऽऽदित्ये ह्युपस्थानं "सम्राडा"-हवनीयके॥ ९॥
"तुथोऽस्या"ऽस्तावदेशे स्याच्चात्वाले तु "नभोऽसि" हि।
"असम्मृष्टोऽसि"शामित्रे आग्नीध्रीये "विभूरसि" ॥ १०॥
हे तुर्द्धिष्ण्ये"वह्निरसि""श्वा" मैत्रावरुणीयके।
"तु" ब्राह्मणाच्छंसिके स्या-"दुशिक्"स्याद्धातृ-धिष्ण्यके ॥ ११॥
नेष्टकेऽथा"ङ्गारि" रच्छावाके"ऽवस्यु रसी" त्यथ।
"शुन्ध्यु" मार्जालीयऔदुम्बर्यां स्या"दतघे"तिहि॥ १२॥
"समुद्रो" ब्रह्मणः स्थाने "अहिः" प्राजहिते भवेत्।
स्याद्गार्हपत्ये"ऽजोऽसी"ति "सगरा" दक्षिणाग्निके ॥ १३॥
"कव्यो"दक्षिणवेद्यन्ते"पात मा" सर्वसंहृतौ।
चतुर्थखण्डे मन्त्राणां विंशतिःसमुदीरिता॥ १४॥
"ऋते०" मृज्याद्द्वारबाहू "मामे"त्यन्तःप्रवेशनम्।
"नम" इत्युपविश्याऽथ"श्येन" श्चमसवीक्षणम्॥ १५॥
"इन्दो"द्विर्भक्षये-"दूर्व्वो" मुखच्छिद्राणि संस्पृशेत्।
"सोमरा", हृदयस्पर्शः"सोमगी" र्नाभिमामृशेत॥ १६॥
चमसं पूरये-"दाप्या""ऽवसै"-रप्याभिर्मन्त्रतः।
"दीक्षायै"स्तोमभागोऽयं भवेन्मन्त्रचतुष्टयात्॥ १७॥
"वायु" र्माध्यन्दिने योगो "वृषकः" स्वामिवाचनम्।

---

(१) अग्निष्टोमे। द्वितीयखण्डे। (२) तृतीयखण्डे।

"इन्दौ"भक्षस्तोमयोगः "सूर्योयु "सवनेभवेत् ॥ १८ ॥
"स्वरोऽसि"वाचये"दिन्दो०"कुर्याच्चमसभक्षणम् ।
"आयुः"सौम्यञ्चरुं पश्ये"चन्मे"तत्र विकल्पयेत् ॥ १९ ॥
"येन"सौम्यञ्च संस्पृष्ट्वाऽङ्गुलिभ्यामक्षिमार्जनम् ।
पञ्चविंशतिमन्त्राः स्युः पञ्चमे खण्डईरिताः ॥ २० ॥
"ऐन्द्र" "मिन्दो" स्तोमभक्षः "स्तुतस्य" स्वामिवाचनम् ।
"इष्ट"सन्धौ स्तोमभक्ष"मृतस्य"स्तोममोचनम् ॥ २१ ॥
"सोमेन"निर्गमः सूर्यस्योपस्थानं"सुभू"-रिति। ।
"अपां"द्वाभ्यामाहुती द्वे धानामोक्षोहारियोजने ॥ २२ ॥
"देवा"ऽष्टौ शकले होमा "अप्सु धौ" चमसं स्पृशेत् ।
"मधु"पाणीनुपघ्राय चमसोत्सेचनं "शमत्" ॥ २३ ॥
कामाभ्यावर्त्तयेदेत"दूर्ग"स्तदुरसि क्षिपेत् ।
"प्राणे" ति मुखसंस्पर्शो "दधी"ति दधि भक्षयेत् ॥ २४ ॥
चतुर्विंशतिमन्त्रास्तु षष्ठे खण्डे प्रकीर्तिताः ।
साश्वं रथन्दक्षिणार्थं प्रतिगृह्णन्ति चेत्तदा ॥ २५ ॥
मृज्यादश्वमुखान्यश्वनामयुग्मचतुष्टयम् ।
रथोदूर्ध्वस्पर्श"आदित्याः","वायोश्च"र्म्मप्रतिग्रहे ॥ २६ ॥
अस्त्रप्रतिग्रहे "नक्ष" "सूर्य्य"लोहप्रतिग्रहे ।
"रथे"ति दक्षिणे चक्रे स्पर्शो "वामे"त्यधिष्ठितौ ॥ २७ ॥
"कृशा"यच्छेत्सव्यरज्जुं स्पृशे-"हाशे"ति दक्षिणम् ।
मन्त्रास्तु सप्तमे खण्डे षोडशेत्यवगम्यताम् ॥ २९ ॥
पुरस्तात्सर्वमन्त्राणां "देवस्यत्वे"त्यमुञ्जपेत् ।
"वरुणे"त्यादयोमन्त्राः क्रमात्तत्तत्प्रतिग्रहे ॥ ३० ॥
अश्वोगौरप्यजः स्वर्णमजाऽविर्वसनाङ्गिराः(१) ।
उष्ट्रोमृगश्च पुरुषोहस्तिवरा व्रीह्यादयः ॥ ३१ ॥
तिल अश्वतरेमन्त्रं."क"इत्यन्तं जपेदथ ।
अष्टादशात्र मन्त्राःस्युरष्टमे खण्ड ईरिताः ॥ ३२ ॥
रश्मिरित्यादय(२)स्तोमभागास्तैरनुमन्त्रणम् ।
कुर्यात्क्रमेण स्तोत्राणां ते त्रयस्त्रिंश ईरिताः ॥ ३३ ॥
वेदार्थस्य प्रकाशेन तमोहार्दन्निवारयन् ।
पुमर्थांश्चतुरोदद्याद्विद्यातीर्थमहेश्वरः ॥ ३४ ॥ * ॥

इतिमन्त्रविनियोगसंग्रहः ॥ :*: ॥

---

(१) अत्र देवतानामनिर्दूदेशेन तत्तद्घटितमन्त्राऊहनीयाः । तेनाष्टादशमन्त्रपूर्त्ति रुक्तदिशा कार्या ॥

(२) एते सर्वसोमयागेष्वङ्गताङ्गता नवमदशमखण्डयोः पठ्यन्ते । अत्रानुवाकद्वयम् "रश्मिरसी"त्येकः । "तन्तुरसी"त्यपरः । तयोराम्नाता मन्त्राःस्तोमान् बृहदादीन्भजन्त इति स्तोमभागा उच्यन्ते ॥

# अथ क्रतुसङ्ग्रहकारिकाः ।

अथाग्निष्टोमसंस्थेन ज्योतिष्टोमेन योयजेत् ।
स पूर्वमृत्विजोवृत्वा देवभूमिविनिश्चये ॥ १ ॥
दीक्षणीयां निर्वपेत्स पत्नीसंयाजसंस्थितिः ।
कृते प्राचीनवंशेऽथ संस्कारा वपनादयः ॥ २ ॥
हुत्वा दीक्षाहुतीः, कार्या दीक्षा कृष्णाजिनादिभिः ।
दीक्षितोनियमैर्युक्तोभवेत्क्षीरव्रतादिभिः ॥ ३ ॥
द्वादशाहं दीक्षितोऽथ भिक्षित्वा द्रव्यमानयेत् ।
सोमञ्चर्म्मण्यथास्थाप्य विवसेत्सोमविक्रयी ॥ ४ ॥
शंय्वन्ता प्रायणीया स्याद्गृह्णीयात्क्रयणीपदम् ।
क्रीत्वा सोमं रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत् ॥ ५ ॥
आतिथ्यां निर्वपेत्सोममासन्द्यामुपसादयेत् ।
आतिथ्येष्टिरिडन्ता स्यात्तानूनप्त्रमवद्यति ॥ ६ ॥
दीक्षामवान्तरामेति प्रवर्ग्योपसदोः कृतिः ।
दिनत्रये तत्कृतं स्याद्वेदिर्म्मध्यन्दिने भवेत् ॥ ७ ॥
षट्त्रिंशत्पददीर्घैषा प्राग्वंशात्पूर्वतः स्थिता ।
प्रातः प्रवर्ग्यमुद्वास्य पश्चादुत्तरवेदितः ॥ ८ ॥
शकटे द्वे हविर्द्धाने हविर्द्धानञ्च मण्डपम् ।
पश्चात्सदस्तस्य मध्ये निखातौदुम्बरी मिता ॥ ९ ॥
दक्षिणस्यानसोऽधस्ताद्गर्त्तानुपरवान्खनेत् ।
विधाय फलकास्यान्तानग्रे कुर्यान्मृदा खरम् ॥ १० ॥
निर्वपेद्धिष्ण्यगानग्नीषोमीयं पशुमाचरेत् ।
प्रयुज्योचितपात्राणि दर्शवत्सर्वमाचरेत् ॥ ११ ॥
आज्य आसादिते वेद्या अन्ते यूपं समुच्छ्रयेत् ।
यूपस्योच्छ्रयणादूर्ध्वं समाप्य पशुन्ततः ॥ १२ ॥
वैसर्जनानि हुत्वाऽग्निं सोमं ग्रावादि चानयेत् ।
हविर्द्धाने स्थापयित्वा गृह्णीयाद्वसतीवरीः ॥ १३ ॥
प्रयुञ्ज्यात्सोमपात्राणि महारात्रे खरादिषु ।
ग्रावस्तुत्स्थापिते सोमे पक्षिणान्वनितःपुरा ॥ १४ ॥
स्यात्प्रातरनुवाकार्थमुपाकरणमादरात् ।

वसतीवर्यपां प्राप्तौ प्रचारः स्याद्दधिग्रहे ॥१५॥
उपांशुदाभ्यौ हुत्वाऽथ महाभिषवमाचरेत् ।
उपांशुमन्तर्यामञ्च हुत्वाऽरिक्रन्तु सादयेत् ॥ १६ ॥
अथेन्द्रवायवं पात्रे गृहीत्वा सादयेत्खरे ।
योमैत्रावरुणन्तत्तुश्रीणाति पयसा ग्रहम् ॥ १७ ॥
शुक्रः श्टतोहिरण्येन श्टतोमन्थीतु सक्तुभिः ।
गृहीत्वाऽग्रयणं गृह्णात्यतिग्राह्याभिधग्रहान् ॥ १८ ॥
गृहीत्वोक्थ्यं ध्रुवोग्राह्यः पवमानग्रहास्त्रयः ।
पूतभृद्द्रोणकलशोपराश्चाधवनीयकः ॥ १९ ॥
ते बहिष्पवमानाय प्रश्रुयन्त्यत्र पञ्च ते ।
गृहीत्वाश्विनमाग्नेयपशोः कुर्यादुपाकृतिम् ॥ २० ॥
सवनीयपुरोडाशैश्चरित्वा ह्येन्द्रवायवम् ।
हुत्वा ग्रहन्द्वयोर्मैत्रावरुणाश्विनयोर्हुतिः ॥२१॥
शुक्रमन्थादिकान्कृत्वा चमसानपि जुह्वति ।
संरक्ष्यर्त्तुग्रहेन्द्राग्निसोमप्रतिगरस्ततः ॥ २२ ॥
आज्यस्तोत्रेभ्य ऊर्ध्वं हि प्रातः सवनसंस्थितिः ।
माध्यन्दिने तु सवने पुरोडाशः पशोर्भवेत् ॥ २३ ॥
ग्रहोमरुत्वतीयः स्यात्पवमानेन संस्तुतिः ।
दधिघर्म्मे हुते दद्याद्दक्षिणास्ते यथायथम् ॥ २४ ॥
मरुत्वतीयांस्तान्हुत्वा माहेन्द्रेण समाप्यते ।
तृतीयसवनारम्भमादित्यग्रहमाचरेत् ॥ २५ ॥
आर्भवेण स्तुवीताथ पश्वङ्गः प्रचरत्ययम् ।
सावित्रवैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा ॥ २६ ॥
पात्नीवतग्रहादूर्ध्वं यज्ञायज्ञीयसंस्तवः ।
आग्निमारुतशस्त्रं स्याद्गृह्णीयाद्धरियोजनम् ॥ २७ ॥
समाप्ते सवने पश्चात्कुर्यादवभृथन्ततः ।
कुर्यादुदयनीयेष्टिमनुबन्ध्यां यजेत गाम् ॥ २८ ॥
दैनिकानिर्वपेद्देवसुवायापि यजूंष्यथ ।
उपोष्य वेदिमाग्नेयमिष्ट्वाऽग्निष्टोमसंस्थितिः ॥ २९ ॥

इति क्रतुसङ्ग्रहकारिका अग्निष्टोमान्तीयाः समाप्तिमायन् ॥ * ॥

श्रीः ।

# श्रीलाट्यायनीयम्

## श्रौतसूत्रम्

### ( अग्निष्टोमान्तो भागः )

( मङ्गलाचरणम् )

नत्वा श्रीपतिपादपद्मयुगलं मत्वा(१) महाब्राह्मणम्—
श्रौत—स्मार्त्त-सुकर्म्मकाण्डनिवहे क्लृप्तां परीक्षां बुधैः ।
सम्राट्संसदुरीकृतामभिनवां विज्ञाय लाट्यायने-
श्रौते कर्मविधौ निजेऽ(२)तिरुचिरा व्याख्या मया तन्यते ॥ १ ॥
भाष्यम्प्राक्तनमञ्जसा न हि विदां बोधाय बोभूयते ।
अन्तेवासिजना विविग्नमनसस्तान्दित्सवः साम्प्रतम् ॥
मामभ्यर्थ्य कृतेऽस्य संसदि सतां प्रावर्त्तयन्नित्यसौ ।
श्रील श्रीमिथिलामहीन्द्रमहिलालक्ष्मीवतीप्रीतये ॥२॥ (युग्म(३)कम् )

तदत्र—

सूत्रं द्राह्यायणीयं तदुपरि विदुषा धन्विना का(४)शितं (५)तम्-
दीपं,(६) विद्वत्प्रकाण्डस्तुतमथ निखिलं स्वामिभाष्यं(७) विचार्य ॥
सूत्रे लाट्यायनीये सुरुचिरसरलाख्या मया या कृतेयम्-
व्याख्या प्रत्नार्थसारा(८) शिशुजनसुखबोधाय सा बोभवीतु ॥ ३ ॥

---

( १ ) ताण्ड्यमहाब्राह्मणस्य मननं कृत्वा ॥

( २ ) आत्मीये ( सामवेदीये ) आत्माऽत्रैतद्विनिर्म्मातुः ।

( ३ ) तथा चाहुः—"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः स्यात्तु विशेषकम् ।
कलापकञ्चतुर्भिः स्यात्कुलकन्तु ततः परम् ॥" ॥ इति ॥

तेनाऽसौ ( सरलाख्या ) अतिरुचिरा व्याख्या मया तन्यते । इत्येवं गतेनास्यान्वयोबोध्यः ।

( ४ ) प्रकाशितम् । ( ५ ) प्रसिद्धम् । ( ६ ) दीपनामकं तदीयं व्याख्यानम् ॥

( ७ ) अग्निस्वामिभाष्यम् । ( ८ ) प्रत्नयोः पुरातनयोर्व्याख्ययोरर्थः प्रत्नार्थः । स एव सारोदृढांशोयस्यां सा । "सारोबले दृढांशे च" इति । 'पुराणप्रतनप्रत्नपुरातनचिरन्तनाः" इति चामरः ।

अथ भगवान्सूत्रकारो लाट्यायनः प्रथमन्तावत्परिभाषाङ्करोति—

अथ विध्यव्यपदेशे सर्वक्रत्वधिकारः ॥ १ ॥

अथेत्ययन्निपात आनन्तर्यापेक्षोमङ्गलार्थः, पूर्वप्रकृतापेक्षोऽधिकारा र्थश्चेत्यग्निस्वामिनः। वाक्योपक्रम एवायमतः शब्देन सहेति द्राह्यायण- सूत्रभाष्यम्। स हि (द्राह्यायणः) अथातइत्येवमिदमसूत्रयत्। विधानं विधिः। विशेषकथनं व्यपदेशः। तदभावोऽव्यपदेशः। तदयमर्थः। विधौ विशेषाऽकथने सर्वक्रतूनान्तत्राधिकार इति। वक्ष्यति हि "ऋत्विगार्षे योऽनूचानः" (९ सू०) इत्यादि तत्सर्वक्रतुसाधारणमिति ॥ १ ॥

मन्त्रविधिश्चादिग्रहणेन ॥ २ ॥

चकारः परिभाषासमुच्चयार्थः। आदिग्रहणेन कृत्स्नस्य विधिर्न पुनरुपात्तमात्रस्येत्येतच्च बोद्धव्यमिति ॥ २ ॥

अथ मन्त्रान्तः कथं विज्ञेय इत्यत्रोच्यते—

उत्तरादिः पूर्वान्तलक्षणम् ॥ ३ ॥

उत्तरमन्त्रस्यादिना पूर्वमन्त्रस्यान्तोलक्ष्यते। तथा चोत्तरमन्त्रस्या दिग्रहणं पूर्वमन्त्रस्यावसानलक्षणं वेदितव्यमिति। यथात्र सूत्रकारः "देवोवेवमेत्वि"-ति (२१ सू०) उत्तरमन्त्रादिं ग्रहीष्यति। तस्माद् 'भुक्षिषीये" त्यसौ "महन्म" इति (१० सू०) पूर्वमन्त्रस्यान्त इति द्रष्ट व्यम् ॥ लक्षणग्रहणमन्तस्यादेश्च संसर्गोमाभूदिति ॥ ३ ॥

एकश्रुतिविधानान् मन्त्रान् कर्माणि चोद्गातैव कुर्यादनादेशे ॥ ४ ॥

अनादेशे विशेषाकथने, एकवचनश्रुत्या ये विधीयन्ते त एकश्रुतिवि- धानाः "महन्मे वोच इति करिष्यन्प्रतिमन्त्रयेत" (१० सू०) इत्येवन्नि- र्दिष्टा मन्त्राः। तान् कर्म्माणि च "पृथक्सावित्रीपादैर्म्मधुपर्कस्य पिबेत्" (१–२ सू०) इत्येवमादीनि। तानि उद्गातैव कुर्यात् ॥ आदेशश्च "प्रस्तोता हविर्द्धानं गच्छेत्" "मध्यन्दिने हुन आदित्यग्रहे प्रतिहर्ता भ वति" इत्येवमुक्तः ॥ ४ ॥

उक्तमुत्तरादिः पूर्वान्तलक्षणमिति(३ सू०)। यत्र तल्लक्षणं न सम्भवति उत्तरमन्त्राभावात् तत्र किमित्यपेक्षायामाह—

यावद्यजुरनादिष्टान्तान्मन्त्रान् ॥ ५ ॥

येषां मन्त्राणामन्ता न आदिष्टास्ताननादिष्टान्तान्मन्त्रान् यावद्यजुः प्रतीयात् यावदेकार्थप्रतिपादकम्पदजातं तावत्परिमाणान्प्रतीयादित्यर्थः। अग्निस्वामिनस्तु तेषु यावदेव यजतिसमर्थन्तावदेव प्रयोक्तव्यमिति। ये

चार्थवादा मध्ये पठितास्तेषामुद्धार इतीत्येवं व्याचख्युः ॥ अत्रोदाहरणम्—औदुम्बर्युच्छ्रयणे द्राह्यायणीयं सूत्रम् "अध्वर्युणा सहोच्छ्रयेद्दक्षिणोत्तानाभ्यां पाणिभ्यां स्तुनानस्त्वेति" अत्र "द्रूंह पृथिवीन्तामन्वारभते" इति मन्त्रान्तः। तत्र "द्रूंह पृथिवीम्" इत्येतावदेव मन्त्रान्तं विद्यादिति ॥ ५ ॥

अथ ऋक्साम्नां को विधिरित्यत आह—

ऋचश्चादिग्रहणेन ॥ ६ ॥

अनादिष्टान्तास्वृक्षु यद्यपि क्वचिन्मध्ये वाक्यसमाप्तिः स्यात् तथाप्यादिग्रहणेन कृत्स्ना एवर्चः प्रतीयात्। यथा "शन्नोदेवीरित्यप उपस्पृश्य" इत्यादौ ॥ अत्र "शन्नोदेवीरभिष्टय" इति प्रतिपादमवान्तरवाक्यसमाप्तिर्भवति। तत्र प्रथमपादमात्रस्य ग्रहणं प्राप्तमनेन सूत्रेणापोद्यत इति ॥ एवं परिभाषा कृता ॥ ६ ॥

अथेदानीमृत्विग्लक्षणमाह—

ऋत्विगार्षेयोऽनूचानः साधुचरणः वाग्मयऽन्यूनाऽङ्गोऽनतिरिक्ताङ्गोद्व्यमतश्चानातिकृष्णोऽनतिश्वेतः ॥ ७ ॥

ऋत्विगिति(१)जातिशब्देन। ऋतौ(२)यजतीति ऋत्विक्। स च दशलक्षणसम्पन्नोब्राह्मणोभवति—आर्षेयः ऋषेर्बहु(३)श्रुतस्यापत्यम् 'इतश्चानिञः" (पा० ४।१।१२२) इति ढक्। ढस्येयः (पा०७।१।२) अनूचानः साङ्गे प्रवचने (वेदे) गुरोरधीती। तथा चामरः "अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तुयः" इति। कल्पसूत्राऽध्यायीति बौधायनः। अग्निस्वामिनस्तु "अनूकवाननूचानः शिष्येभ्योविद्यासम्प्रदानं यः कृत-

---

(१) अत्र "कर्म्माण्युद्गातेव कुर्यात्" इति प्रसक्तमुद्गातृमात्रलक्षणमपहाय साधारणत्वाहत्विग्गुणानां, सर्वर्त्विजोऽधिकृत्य लक्षणमारभते सूत्रकृत् ॥

(२) "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादिना द्विजानामाधानकालऋतूपलक्षितः। किंबहुना रथकारस्याधमजातेरपि वर्षार्त्तुरेवाधानकाल आम्नायते 'वर्षासु रथकारोऽग्नीनादधीत"। इति। तेन ऋतुयाजी द्विजो (ब्राह्मणो) ऽत्र ऋत्विक्। क्षत्रदेर्याजनानधिकारात्॥ तथा चात्र यजतिरन्तर्भावितण्यर्थोबोध्यः ॥ वस्तुतस्तु ऋत्विक्पदं योगरूढमिति नातिप्रसङ्गोबोध्यः।

(३) तथा च तैत्तिरीयब्राह्मणम् "एष वै ब्राह्मण ऋषिरार्षेयोयः शुश्रुवान्" इति। आदशमात्पुरुषादव्यवच्छिन्नमार्षं यस्य स आर्षेय इत्यग्निस्वामिनः। ऋषिर्दर्शनात् स्तोमान्ददर्शेत्यौपमन्यवः।

वानित्याहुः । साधुचरणः-प्रशस्तकर्म्मा ( बहुब्राह्मणकर्म्मस्ववस्थितः ) वाग्मी-प्रशस्त-( संस्कृत-) वाक् । "वाचोयुक्तिपटुर्वाग्मी" इत्यमरः । अन्यूनाङ्ग इति चतुरङ्गुलादिप्रतिषेधः । अनतिरिक्ताङ्ग इति षडङ्गुलादि प्रतिषेधः । द्वयसतः(१)प्रमाणतश्चेति पूर्वान्वयि । पुरुषलक्षणं शास्त्रसिद्धं यदङ्गप्रत्यङ्गप्रमाणं ततोऽप्यन्यूनाङ्गोऽनतिरिक्ताङ्ग इत्यर्थः । अनतिकृष्णोऽनतिश्वेत इति बालवृद्धयोः प्रतिषेधः ॥ ७ ॥

अथ याज्यलक्षणमाह—

याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यातः ॥ ८ ॥

प्रथमैरिति । आर्षेयः साधुचरणोऽनूचानश्चेति । तावन्मात्रमेव तस्यापेक्षितं न वाग्मित्वादिरिति ॥ ८ ॥

अथोद्गातुः कर्मोच्यते—

सोमप्रवाकमकरिष्यन् "नमः सोमाय राज्ञे"
इत्युक्त्वा प्रत्याचक्षीत ॥ ९ ॥

'असौ सोमेन यजते स त्वामार्त्विज्यमभ्यर्थयत" इति योवक्ति स सोमप्रवाकः, तं यद्यार्त्विज्यमकरिष्यन्स्यात्तदा सोमं नमस्कृत्य प्रत्याचक्षीत नास्ति मे श्रद्धा अन्योवरणीय इति । प्रत्याख्यानदोषशान्त्यर्थो नमस्कारः । श्रूयते हि प्रत्याख्याने दोषः "यशसा वा एषोऽभ्येति यश्चार्त्विज्येन । तं यः प्रतिरुन्धेत् यशः स प्रतिरुन्धेत्" इति ( ब्रा० ) ॥ ९ ॥

एवमार्त्विज्यमकरिष्यतोविधिमुक्त्वा सम्प्रति करिष्यतोवृतप्रतिमन्त्रणादिः-समिदाधानाहवनीयोपस्थानान्तोविधिर्वक्तव्यः स उच्यते—

"महन्मेऽवोचः"इति करिष्यन्प्रतिमन्त्रयेत ॥ १० ॥

आर्त्विज्यं करिष्यन् "महन्मेऽवोचः" इति सोमप्रवाकमभिमन्त्रयेत । मन्त्रोयथा—ॐमहन्मे वोचोभर्गोमे वोचोयशोमे वोचः स्तोमं मे वोचोमुक्तिं मे वोचस्सर्व्वम्मे वोचस्तन्माऽवतु तन्मा विशतु तेन भुक्षिषीय" इति ॥ १० ॥

---

( १ ) ननु प्रत्ययः परश्चेत्यनुशासनात् ( पा-३।१।-२) केवलद्वयसच्प्रत्ययस्यप्रयोगोनोपपद्यते । नैवम् । परश्चेतिसूत्रमधिकृत्य महावार्त्तिककारेणोक्तं "द्वयसजादीनां केवलप्रत्ययप्रयोगस्य दृष्टत्वात्तद्वदेवान्येषामपि प्रत्ययानां केवलप्रयोगप्रसङ्गे प्रयोगनियमार्थम्परश्चेति सूत्रमिति । तेन द्वयसजादीनां केवलप्रयोगप्रसङ्गे प्रयोगनियमार्थम्परश्चेति सूत्रमिति । तेन द्वयसजादीनां केवलप्रयोगः कण्ठेनैव शब्दविद्भिः साधुत्वेनोक्त इति न कश्चिद्दोष इति द्राह्यायणसूत्रभाष्यम् । अत एव च तारतम्यमित्यादयः प्रचुरप्रयोगविषयास्तत्र तत्रोपलभ्यन्ते ।

तन्न जह्यादप्रोक्तेऽपि करिष्यामीति विदित्वा ॥ ११ ॥

करिष्याम्यार्त्विज्यमिति विदित्वा निश्चित्य सोमप्रवाकेणानुक्तेऽपि सोमे तत्रूनप्रतिमन्त्रणं यजुः "महन्मेऽवोचः" इति न जह्यान्नोत्सृजेद्ब्रूयादेवेत्यर्थः ॥ ११ ॥

आवसथं(१) सोमप्रवाकाय लवणमन्नं दध्नाऽऽहारयेत् ॥ १२ ॥

आवासयन्ति गृहिणोऽतिथीन्यत्र स आवासथोनिवासभूमिर्बहिःशाला तं "प्रापये" तिशेषः। सोमप्रवाकाय लवणं तत्संसृष्टमन्नं दध्ना युक्तमाहारयेद्भोजयेत्। अत्रसंसृष्टार्थस्यठका "लवणाल्लुक्" (पा० ४।४।२४) इतिलुक् ॥ १२ ॥

प्रहिणुयात्प्रस्तोतृसुब्रह्मण्यौ पुरस्तात्कर्मभ्यः ॥ १३ ॥

औदुम्बरी-सम्मानादेः स्वकर्मणःपुरस्तात् पूर्वं यानि यानि कर्माणि(२)आह्वानादीनि तदर्थं (तादर्थ्येऽत्र चतुर्थी) प्रस्तोतृसुब्रह्मण्यौ यजमानाय प्रहिणुयात् प्रेषयेत् ॥ १३ ॥

अथोद्गातुर्देवयजनं प्रतिगमन(३)कालमभिधास्यन्देवयजनलक्षणन्तावदाह—

प्रागुदक्प्रवणं देवयजनं लोमशमवृक्षं समम् ॥ १४ ॥

प्रागुदञ्चौ पूर्वोत्तरौ देशौ प्रवणौ निम्नौ यस्य तत्प्रागुदक्प्रवणं यद्वाप्रागुदीच्योरन्तरालं या दिक् सा प्रागुदक्। सा प्रवणा निम्ना यस्य तदीशानप्लवमित्यर्थः। चात्वाल(४)सारिण्योयत्रापः—स्युस्तम्। लोमशं तृणौ(५)षधिबहुलमनूषरमित्यर्थः। अवृक्षन्नास्मिन् वृक्षाः सन्तीति। सममवि-

---

(१) "वेश्ममावसथः पुमानि" इति कोशः। अग्निस्वामिनस्तु आवसन्ति। तमित्यावसथः। सोमं प्रब्रूते सोमप्रवाकः तस्मै सोमप्रवाकाय तादर्थ्ये चतुर्थी। लवणमन्नं लवणसम्पृक्तमन्नं लवणं तत् दध्ना सह हारयेत् भोजयेत्। एवं सूत्रार्थः। आवासथश्च सोमप्रवाकाय कर्त्तव्यस्तत्रैव चास्य भोजनन्नेयमिति व्याचख्युः। तन्मते आवसथ इति विसर्गान्तः पाठः। हारयेदिति चाङारहितः। (२) ताक्ष्यसामादीनीत्यग्निस्वामिनः।

(३) अग्निस्वामिनस्तु–तयोः कर्म्मार्थं प्राग्गमनं, कर्म्माणि च देवयजने क्रियते अत आचार्योदेवयजनलक्षण विवक्षुराहेत्येवमिदमवतारयामासुः।

(४) "चात्वालेहोमकुण्डे स्यादि"ति मेदिनी। अयमीशानभागे देवयजनस्य जलसम्भृतो भवतीति।

(५) भूमेस्तृणौषधयोलोमानि श्रुतौ परिपठितानि। अत्र मत्वर्थीयः शप्रत्ययः (पा० ५।२।१००)॥

षमं समतलमिति यावत् । तदेवं देवयजनम् । देवाअस्मिन्निज्यन्तइत्यधिकरणे ल्युट् । ( पा० ३।३।११९ ) योरनादेशः ॥ १४ ॥

किञ्च—

पुरस्ताच्चास्यापः स्युः ॥ १५ ॥

अस्येति समीपलक्षणा षष्ठी । देवजयनस्य समीपे पुरस्तात्पूर्वप्रदेशे आपोजलानि च स्युर्भवेयुर्नदी वा तडाकोवा। अग्निस्वामिनस्तु पुरस्ताच्चेति चशब्दः क्रियते पुरस्तान्नियमतोऽन्यासु च दिक्षु विप्रतिषेध इति । स्युरिति स्वभावतः स्युर्न कृत्रिमा इति च प्राहुः ॥ १५ ॥

अथ पुनर्यत्र तासामुपपत्तिर्न स्यात्तत्र किंस्यात् ? अत्रोच्यते—

तदभावे महावृक्ष उदपानोमहापथोवा ॥ १६ ॥

तदभावे तासामपामभावे पुरस्तान्महावृक्षोन्यग्रोधादिर्भवेत । तथा च श्रुतिः "पुरस्ताच्चित्रं देवयजनम्"इति । चित्रश्चित्रियोवनस्पतिरुक्तः । उदपानः कूपः । "पुंस्येवान्धुः प्रहिः कूप उदपानन्तु पुंसिचे"त्यमरः ॥ अथवा देशान्तरगामी पन्था महापथः । समासान्तोऽत्राऽप्रत्यय. ( पा० ५।४।७४ ) ॥ १६ ॥

नचास्य स्थलतरमदूरे स्यात् ॥ १७ ॥

अस्य देवयजनस्यादूरे समीपे स्थलतर(१)मत्युन्नतः प्रदेशः पर्वतादिर्न स्यात् ॥ किन्तु देवयजनमेव समीपप्रदेशादुन्नत स्यादित्यर्थः । तथाच श्रुतिः "यदुन्नतं भूम्या अनूषरमि"ति ॥ १७ ॥

देवयजनमात्रञ्च पुरस्तात् ॥ १८ ॥

अदूरे न स्यादित्यनुवर्त्तते । अस्य देवयजनस्य पुरस्ताददूरे समीपे शम्यानिपातादर्वाक् देवयजनमात्रं देवयजनप्रमाणं स्थानं (देवयजनाय पर्याप्तः प्रदेशो ) न भवेदित्यर्थः । तथा च श्रुतिः "तस्य न पुरस्ताद्देवयजनमात्रमतिशम्याद्यावच्छम्याप्रास." इति ॥ १८ ॥

एवमुक्तमविशेषेणदेवयजनलक्षणमथाभिचरणीयेषु विशेषविवक्षुराह—

विपर्यस्याभिचरणीयेषु स्थलादन्यद्देवयजनमात्राच्च ॥ १९ ॥

अभिचरणीयेषु अभिचारार्थेषु यथोक्तं देवयजनलक्षणं विपर्यस्य कुर्यात् । किंसर्वमेव विपर्यस्येन्नेत्याह—स्थलादिति । नचास्येत्याद्यनुपदोक्तसूत्रद्वयोक्तलक्षणादन्यत्सर्वं विपर्यसनीयं स्यात् तेन दक्षिणप्रत्यक्प्रवणम् ऊषरं विषमं च पुरस्ताज्जलशून्यमित्येवमभिचरणीयेषु देवयजनमिति ॥ १९ ॥

---

( १ ) अश्वतरादिवदत्र कुत्सार्थे तरप् प्रत्ययः । कर्मानर्होहिंसः ।

अथोद्गातुर्गमनकालमाह—

स्वयं व्रजेत् क्रय उपवसथ्ये वा ॥ २० ॥

क्रयं सोमक्रयदिवसे अथ उपवसथ्ये सुत्यायाः पूर्वदिवसे वा स्वय मात्मनैव व्रजेत् अनाहूताऽपि। न पुरुषान्तर प्रहिणुयादित्यर्थः। "अनाहूतोऽध्वरं गच्छेत्" इति स्मृत्यन्तरसंवादात्। अत्राप्यर्थोऽन्तर्भाव्यः। अत्र "यदुद्गातौदुम्बरीं प्रथमेन कर्म्मणाऽन्वारभते" इति श्रुतेरौपवसथ्ये एव गमनमुद्गातुरावश्यकम्। ततः पूर्वकर्म्माभावादिति गम्यते। "तानूनप्त्रमवमृशन्तोजयेयुः" इति विधानात् तानूनप्त्रावमर्शनार्थं सोमक्रयदिवसे गमनं सर्त्र्त्विक्साधारणमित्युद्गातुरपि तत्रमैति गम्यते। तेन-विकल्पः। औपवसथ्यगमनपक्षे तानूनप्त्रावमर्शनादीनां निवृत्तिरिति धन्विव्याख्यानम् ॥ २० ॥

अथ तस्य गमनक्रिया प्रकार उच्यते—

उदङ्ङेव तु गृहेभ्यः प्रथमं "देवोदेवमेत्वि"ति ॥२१॥

स्वगृहेभ्योनिर्गच्छन्नुद्गाता प्रथममुदङ् उत्तराभिमुख एव "व्रजे(१) त्" इत्यनुवर्तते। "देवोदेवमेत्वि"ति-एवं यजुर्जपन्नित्यर्थः। मन्त्रोयथा "ॐदेवोदेव मेतु सोमः सोममेत्वृतस्य पथा" इति। तुशब्दोऽत्रान्यतोद्वारेऽपि तद(२)र्थमित्यग्निस्वामिनः ॥ २१ ॥

दूरं व्रजित्वा "विहायदौष्कृत्य"मिति ॥ २२ ॥

दूरमध्वानं गत्वाऽल्पेऽवशिष्टे "विहाय दौष्कृत्यमि"त्येतद्य(३)जुर्जपेत् ॥ "देवयजनं व्रजामी"त्यस्याध्याहारमपरे वर्णयन्ति। अन्ये पुनर्यावद्ग्रहणमेव, अवचनात् ॥ २९ ॥

"वद्गानामासी"ति पन्थानमापद्य ॥ २३ ॥

देवयजनगामिनमसाधार(४)णम्पन्थानमासाद्य "वद्गानामासी"त्येतद्यजुर्जपेत् ॥ मन्त्रोयथा—' ॐवद्गानामासि सृतिः सोमसरणी सोमङ्गमेयम्' इति ॥ २३ ॥

---

( १) यद्यपि स्वगृहस्य दक्षिणतोदेवयजनं स्यात् तथापि कतिपयानि पदानि अदृष्टार्थमुदङ्मुखोगच्छेदित्यर्थः।   ( २ ) उदङ्ङेवगमनार्थम्।

( ३ ) अत्र धन्वी—यदिदूरमध्वानं व्रजेत्तदानीमप्रयतदेशाभिगमाद्यवर्जनीयं स्यात्ततो यत्किञ्चिद्दुष्कृतमवश्यम्भवेत् तच्छान्तये विहाय दौष्कृत्यमिति जपेत्। केचिद्दूरमध्वानमर्धाधिकं गत्वा मन्त्रं जपेन्नित्य इत्याहुरिति। अत्र(मन्त्रे) विहायेत्यस्यमनसा परिहृत्येत्यर्थः।

( ४ ) अनन्यगामिनम् ॥

उत्तरं वेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः "पितरोभूरि" इति ॥ २४ ॥

यस्योपवसथ्येऽपि समागमनं भवति स देवयजनमहावेदेरुत्तरमन्तं महावेदिपार्श्वमाक्रम्य तत्रैव स्थित्वा दक्षिणं वेद्यन्तमीक्षमाणः "पितरोभूरि" इत्येतद्यजुस्त्रिर्जपेदित्यर्थः ॥ यस्य पुनः क्रयेऽह्नि समागमनं भवति स पत्नीशालायां वेदिमाक्रमते, महावेदेरभावात् ॥ २४ ॥

यजुरन्तरयेऽन्वाहारं धानञ्जप्यः (य्यः) ॥ २५ ॥

अन्तरय(१)स्त्यागः । उत्सर्गः । अन्वाहरणमन्वाहारोऽनुत्सर्गः । सर्वत्र यजुषोमन्त्रस्य प्रमादादन्तरये(२)उत्सर्गे (अप्रयोगे) सति यदा पश्चात्स्मरति तदा तस्यान्वाहारमनुत्सर्गं प्रयोगं कुर्यान्मन्त्रोच्चारणजन्यादृष्टसिद्ध्यर्थमिति धानञ्जप्य (य्यः)—आचार्योमन्यते ॥ २५ ॥

उपेक्षणं शाण्डिल्यः ॥ २६ ॥

उपेक्षणं वर्जनमकरणमित्यनर्थान्तरम् । उपेक्षणमेव कार्यं न प्रयोगः ॥ मन्त्रस्यानुष्ठेयार्थप्रकाशनार्थत्वात् । कृते कर्मणि तत्प्रकाशनस्यानपेक्षितत्वादिति शाण्डिल्य आचार्योमन्यते । करणमन्त्रविषयमेतत्सूत्रद्वयं, ये पुनरनुष्ठिते कर्मणि फलप्रार्थनारूपाः "स्तुतस्य स्तुतमसि" इत्यादयोमन्त्रास्तेषां पुनः प्रयोगोभवत्येवेत्याहुरितिधन्वी ॥ २६ ॥

इति ला० श्रौ० सू० प्रथमस्य प्रथमाकण्डिका ॥ १ ॥ १ ॥

अथ द्वितीया कण्डिका—

पृथक् सावित्रीपादैर्मधुपर्कस्य पिबेत् ॥ १ ॥

निवेदितस्य मधु(३)पर्कस्य । अवयवलक्षणा षष्ठी । अंशं सावित्र्यास्त्रिभिः पादैः पृथगेवप्रतिपादं पिबेत् । मधुपर्कलक्षणमुक्तं पारस्करेण "मधुपर्कन्दधिमधुपयोपिहितं काꣳस्यं काꣳस्येन "इति ॥ अत्रांशपानेन शेषप्रतिपत्तिर्वक्ष्यते ॥ १ ॥

तत्रैतदाहरन्ति त्रिष्टरं पादप्रक्षालनमर्घ्यमाचमनीयं मधुपर्कमिति २

---

(१) एतेर्भावे अच्प्रत्यये ( पा० ३।३।५६ ) अय इति । अन्तर्मध्ये अये विच्छेद इति परमार्थः । अत्र षष्ठ्यालुगार्षः ।

(२) भ्रेषे—इति धन्वी । "भ्रेषोभ्रंसो यथोचितात्" इत्यमरः ॥ अन्तराये इति क्वचित्पाठः स प्रामादिकः ।

(३) अत्राग्निस्वामिनः "मधुना पृक्तन्दधिपयः कृतान्नं वा मधुपर्कः । दधनि पयसि वाऽथच कृतान्ने मधु दध्यान्मधुपर्कमेतदाहुः । दधिमधुसलिलेषु सक्तवः पृथगेवेति विहितास्त्रयस्तु मन्थाः" इत्याहुः ।

तत्र तस्मिन्म(१)धुपर्कविधौ एतत् विष्टरादि आहरन्ति आनयन्ति यजमानपुरुषा अर्हयिष्यन्तः। तत्र विष्टरोदर्भासनम् पञ्चविंशतिकुशपत्रात्मकंवामावर्त्तमधःकेशम् "पञ्चाशता कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः" "दक्षावर्त्तोभवेद्ब्रह्मा वामावर्त्तस्तु विष्टरः" "ऊर्ध्वकेशोभवेद्ब्रह्मा अधःकेशस्तु विष्टरः" इति हि तल्लक्षणानि ॥ पादौ प्रक्षाल्येते अनेनेति पादप्रक्षालनम् करणे ल्युट् ( पा० ३।३।११७ ) उदकं पाद्यमिति तदर्थः। अर्घार्थमुदकमर्घ्यम् "पादार्घाभ्याञ्च" ( पा० ५।३।११५ ) इतियत्प्रत्ययः ॥ आचमनायहितमुदकमाचमनीयम्। "तस्मै हितम्" ( पा० ५।१।२५ ) इति छस्तस्येयादेशः। मधुपर्कउक्तलक्षणस्तम् ॥ इतिकरणं परिसंख्यानार्थमेतावदेवेति ॥ २ ॥

तस्य पिबेत् ॥ ३ ॥

तस्य मधुपर्कस्य। षष्ठी पूर्ववदवयवलक्षणात्राऽपि। तेन तदीयम् अंशं पिबेत् ॥ ३ ॥

कथमित्यपेक्षायामाह—

"इदमन्नमयं रस इमा गावः सह श्रिये"ति तु पुरस्तादेकैकस्य ॥४॥

"सावित्री पादस्ये"ति शेषः। पुरस्तात् पूर्वम्। तु शब्दो विशेषणार्थः ॥ ४ ॥

"वाग्बहुबहुमे भूयादि"ति प्रथमस्योपरिष्टात्। "प्राणोवै वाचोभूयान्बहुर्म्मे भूयोभूया"द्विति द्वितीयस्य। "मनोवाव सर्वं मे भूयादि"ति तृतीयस्य ॥ ५ ॥

"सावित्रीपादस्येति पूर्वप्रकृतमनुवर्त्तते। उपरिष्टात्–पश्चात्। प्रथमद्वितीय तृतीय ग्रहणं चतुर्थनिषेधार्थम् तूष्णीञ्चतुर्थमिति ॥ ५ ॥

सर्वे स्वाहाकारान्ताः ॥ ६ ॥

प्रतिमन्त्रमन्ते स्वाहाकारः कार्यः। तथा च "इदमन्नमयं रस इमा गावः सह श्रिया तत्सवितुर्वरेण्यं वाग्बहुबहुमेभूयात्स्वाहा"। इतिप्रथमो मन्त्रः, एवमुत्तरत्रापि मन्त्रौ द्रष्टव्यौ। प्रतिमन्त्रं भक्षणम्। अन्त आचमनं कार्यम्। तदाहरणविधानात्। अत्रगृह्योक्तोमधुपर्कप्रकारोनादरणीयः। सूत्रकारेण क्रत्वङ्गतया पृथग् विधानात् ॥ एतद्देवयजनस्थाने। यजमानगृहे मधुपर्कदानन्तु गृह्यविधिनैव ॥ ६ ॥

---

( १ ) मधुपर्क इति कर्म्मनामधेयम्। अत एवाथ तत्र ग्रहणं किमर्थमिति चेदुच्यते मधुमन्थोदमन्थयोर्मधुपर्ककल्पार्थम्। ते च वक्ष्यन्त इति स्वामिव्याख्यानं सङ्गच्छते ॥

अथ यदि मधुपर्को न स्यात्तदा तत्स्थाने मधुमन्थोदेयस्तस्यभक्षण-मन्त्रमाह—

**"रसोऽसि वानस्पत्योरसं मयि धेही"ति मधुमन्थस्य पिबे-दिति गौतमः "वानस्पत्य" इति प्रवचनम् ॥ ७ ॥**

मधुना लोडिताः सक्तवोमधुमन्थः। "रसोऽसी"ति अनेन मन्त्रेण मधुमन्थस्यांशं पिबेदिति गौतम आचार्योमन्यते। यच्चोक्तं "विष्टरादीनि द्रव्याणि एकैकशस्त्रिस्त्रिर्वेदयेरन्नि"ति तत्र मधुमन्थस्यावेदने प्राप्ते आह—"वानस्पत्य" इति। तथाचाहरणेऽस्य वानस्पत्योवानस्पत्योवानस्पत्य-इति त्रिर्वचनं कार्यमित्यर्थः। प्रेतिस्त्रिरित्यथंमभिदधाति ॥ ७ ॥

**तथा दधिमन्थोदमन्थयोः, "पयस्योऽपयस्य" इतितुरसादेशः ॥८॥**

दध्ना मिश्रिताः सक्तवोदधिमन्थः। उदकेन मिश्रितास्तउदमन्थः। "मन्थौदने"–( पा० ६।३।६० ) त्यादिनोदकस्योदादेशः। उभयोरपि मधुप-र्कस्थानापन्नयोर्वानस्पत्य इति पदस्थाने पयस्योऽपयस्य इति पदद्वयं क्रमेण प्रक्षिप्य तेन रसादेशः कार्य्यः। रसोऽसिपयस्योरसंमयिधेहि" इतिदधिमन्थभक्षणम्। "रसोस्यापयस्य" इत्युदमन्थभक्षणमिति ॥ ८ ॥

**एते वैव प्रवचने, "कालिन्दः" "सारस्वत" इति वा ॥ ९ ॥**

दधिमन्थोदमन्थयोः पयस्योऽपयस्य इत्येते एव वा प्रवचने भवतः। कालिन्दः सारस्वत इति वा यथासङ्ख्यम् ॥ ९ ॥

**शेषं ब्राह्मणाय दद्यात् ॥ १० ॥**

शेषं भक्षितावशिष्टं मधुपर्कं ब्राह्मणाय पुत्राय शिष्याय वा दद्यात् ॥ १० ॥

**तदभावेऽद्भिः संप्रोक्ष्याब्राह्मणाय ॥ ११ ॥**

ब्राह्मणाभावे शेषमद्भिः स्संप्रोक्ष्य अब्राह्मणाय तद्भिन्नाय तत्सदृशाय च क्षत्रियाय वैश्याय वा दद्यात्। पर्युदासबलेनायमर्थः। यथोक्तमभि-युक्तैः "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ। पर्युदासः स दृ(१)ग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ पर्युदासः स विज्ञेयोयत्रोत्तरपदेन नञ्। प्रसज्यप्रतिषेधस्तु क्रियया सह यत्र नञ् ॥" इति ॥ ११ ॥

**"कुरुते"ति गवि प्रोक्तायां ब्रूयात् ॥ १२ ॥**

उक्त–"प्राचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात्।" इति एवं गवि-

---

( १ ) तद्भिन्नस्य तत्सदृशस्य च बोधक इत्यर्थः। तथाच महाभाष्यम् "न ह्यब्राह्म-णमानयेत्युक्ते लोष्टमानीय कृती भवती"ति ॥

प्रोक्तायां "कुरुत" इति ब्रूयात् । प्रैष्यवचनमेतत् । संज्ञपनादिश्रपणान्तव्यापारकरणमभिप्रेतमिति ॥ एष कल्पान्तरविषयः । "अस्वर्ग्यं लोकविद्विष्टन्धर्म्यमप्याचरेन्न तु" इतियाज्ञवल्क्यादिस्मृतेः ॥ १२ ॥

अत उत्सर्गपक्ष एव साधीयानित्युत्स्रक्ष्यन्किं ब्रूयादित्याह—

"उत्सृजत गां तृणानि गौरत्त्वि"ति वा ॥ १३ ॥

अथवा कुरुतेति पदस्थाने एवमेव ब्रूयात् । हे यजमानपुरुषाः ! यूयं गामुत्सृजत बन्धान्मोचयत । गौरियं भवद्भिरुत्सृष्टा तृणान्यत्तु भक्षयत्विति मन्त्रार्थः ॥ १३ ॥

अथैवमुद्गातृकर्म्मोक्त्वा सर्वेषां साधारणं कर्म्मोच्यते—

सर्वेषां यज्ञोपवीतोदकाचमने नित्ये कर्मोपयताम् ॥ १४ ॥

(१)सर्वेषामुद्गातृप्रभृतीनाञ्चतुर्णामप्यार्त्विज्योपक्रमवेलायां यज्ञोपवीतमुदका(२)चमनं च नित्यं कर्मोपयतां कर्मकुर्वताम् ॥ १४ ॥

अव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः ॥ १५ ॥

कर्मोपयतामित्यनुवर्त्तते, कर्मकुर्वतां यज्ञाङ्गैः सह अन्तरा गमनं व्यवायः स केनचिन्न कार्यः । अनभिमुखता ( पृष्ठतः करणं ) व्यावृत्तिश्च यज्ञाङ्गानामेतदुभयं न कार्यम् ॥ १५ ॥

प्राङ्मुखकरणश्चानादेशे ॥ १६ ॥

अनादेशे-विशेषाकथने प्राङ्मुखकरणश्च सर्वेषाम् । सर्वैः प्राङ्मुखैरेव कर्म कार्यम् । आदेशे तु यथादेशम् "प्रत्यङ्मुखस्तिष्ठञ्छिरशि गायत्रं गायेदि"ति ॥ १६ ॥

अथ प्रहितस्य सुब्रह्मण्यस्य (३)कर्म्मोच्यते—

क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवहनं गत्वाऽन्तरेणेषे शमीशाखां पलाशशाखां वा सपलाशां पाणौ कृत्वाऽवतिष्ठते ॥ १७ ॥

---

( १ ) अत्राऽग्निस्वामिनः "सर्वग्रहण किमर्थम् ? उच्यते—सुब्रह्मण्यचतुर्थानां ब्रह्मपञ्चमानां यजमानषष्ठानां सम्बन्धस्तदर्थमित्याहुः । सुब्रह्मण्योनामर्त्विग्विशेषः सामग एव भवति ॥

( २ ) अत्रोदकाचमनं कमण्डलुमुदकपूर्णमाचामन्ति तस्मादित्यग्निस्वामिभाष्यम् ॥ यज्ञोपवीतनित्यत्वे ब्रह्मचर्यं ज्ञापयतीति च ॥

( ३ ) अत्र "प्रहिणुयात्प्रस्तोतृसुब्रह्मण्यौ पुरस्तात्कर्मभ्यः" इति (१।१।१३) पूर्वोक्तक्रमेण प्रस्तोत्रीयं कर्म तावद्वक्तव्यं पूर्वन्ताक्ष्र्यसामादीनामिति प्राप्ते अग्निस्वामिनः "कृताकृतत्वात्ताक्ष्र्यसमादीनां क्रमभेदः" इति कृताकृतत्वादेतस्यानावश्यकत्वादित्यर्थः ॥

अथ राजनि सोमे क्रीते सति सुब्रह्मण्य इति कर्तृनिर्देशः । सोम उह्यते प्राप्यतेऽनेनेतिसोमवहनं—शकटं प्रागीषमवस्थितम् उत्तरेण उत्तरस्यां दिशि तस्य गत्वा । अत्र "एनपा द्वितीया" ( पा० २।३।३१ ) इति षष्ठ्यर्थे द्वितीया, अन्तरेणेषेद्वयोरीषयोर्मध्ये । अत्रच "अन्तराऽन्तरेण युक्ते" ( पा० २।३।४ ) इति षष्ठ्यर्थे द्वितीया । शमीशाखां पलाशशाखां वा सपलाशां सपत्रां "पत्रं पलाशं छदनमि"त्यमरः । पाणौ हस्ते कृत्वाऽवतिष्ठते । अत्र सामर्थ्यादुत्तरामीषामुत्क्रम्य प्रविश्य तिष्ठेदितिगम्यते । अन्यथान्तरेण गत्वा मध्ये तिष्ठेदिति वचनप्रसक्तेः । वक्ष्यति च "तामे वात्रेषामन्वावर्त्तेत "इति ( ५-५-१३ )—

अध्वर्युसम्प्रैषं सर्वत्राकाङ्क्षेत् सुब्रह्मण्यायाम् ॥ १८ ॥

सर्वत्र सुब्रह्मण्यायां(१)सुब्रह्मण्याह्वाने अध्वर्युणा सम्प्रेषणं सम्प्रैषस्तमाकाङ्क्षेत् । तत्प्रेषित एवाह्वयेत् । नान्यथेत्यर्थः । अत्र धन्वी-"तेनातिथ्येष्टिसमाप्तावध्वर्युसम्प्रैषाभावेऽस्माभिरुक्तापि सुब्रह्मण्या न कार्या । तथाच जैमिनिरपि तत्रसुब्रह्मण्यां न विधत्ते । अध्वर्युप्रैषस्य तत्र वैकल्पिकत्वात्" इति ॥ १८ ॥

रश्मी धारयँश्छाखया प्रेष्येद्गावौ ॥ १९ ॥

अनडुहोर्बन्धनार्थौ रश्मी अभीषू प्रग्रहे ( रज्जू ) सव्येन हस्तेन धारयन् पूर्वगृहीतया शाखया गावौ तावनडुहौ प्रेष्येत्(२) शाखया स्पृष्ट्वा गमयेत् । तथाच जैमिनिरपि "शाखया संस्पृशेत्" इत्येवाह १९

"सुब्रह्मण्योमि"ति त्रिराह्वयेत्प्राचि(आ)वर्त्तमाने ॥ २० ॥

सोमवहने शकटे प्राचि प्राङ्मुखे(आ)वर्त्तमाने गच्छति सति म(३)ध्यमस्वरेण "सुब्रह्मण्याम्" इति-एतावन्मात्र वदन् त्रिराह्वयेत् २०॥

षट्कृत्वः प्रतीचि ॥ २१ ॥

प्रतीचि—प्रत्यङ्मुखे शकटे आवर्त्तमाने तेनैव स्वरेण तेनैव मन्त्रेण च षट्कृत्व आह्वयेदित्यर्थः ॥ २१ ॥

---

( १ ) ऐन्द्री आग्नेयी वा ऋक्सुब्रह्मण्या भवति । सुब्रह्मण्याह्वाने इति तृतीयासमासः "सुब्रह्मण्यः सुब्रह्मण्यामाह्वयती"त्यत्र सुब्रह्मण्या नाम देवता इन्द्रोऽग्निर्वा यदीया ऋग्भवेत् ॥

( २ ) अत्र द्राह्यायणीये "दक्षिणं पूर्वम्" दक्षिणमनड्वाहं प्रथमं प्रेष्येदित्युक्तम् ॥

( ३ ) एतच्चेहानुक्तमपि द्राह्यायणीये "मध्यमया वाचा" इति सूत्रशेषदर्शनादुपन्यस्तम् ॥

पूर्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगुह्य ता—
मेवेषामनूत्क्रम्य(१)यथार्थं स्यात् ॥ २२ ॥

पत्नीशालां पूर्वेण पत्नीशालायाः अदूरे पूर्वप्रदेशे गत्वा द्वयोरनुडुहो-रन्यतरस्मिन् विमुक्ते अर्द्धमुक्ते सति शकटस्य छदिषि उपरितने छादने शाखामवगुह्य—अवलम्ब्य तामेवेषाम् ( अनूत्क्रामेद् यामीषाम्पूर्वमुत्क्र-म्य मध्ये प्रविष्टः ) अनूत्क्रम्य अवतीर्य ततो यथार्थं सुब्रह्मण्यः स्यात् । यथाप्रयोजनं स गच्छेद्वा तिष्ठेद्वेत्यर्थः॥ अत्र "एनपा द्वितीया" (पा० २।३। २१) इति षष्ठ्यर्थे द्वितीया । एनप् प्रत्ययश्चादूरे ( पा० ५।३।३५ )॥ २२ ॥

दक्षिणमनड्वाहंसुब्रह्मण्याय दद्यात् ॥ २३ ॥

दक्षिणस्यां धुरि योयुक्तोऽनड्वान् तं सुब्रह्मण्याय दद्यात् यजमान इति सामर्थ्याद् गम्यते ॥ २३ ॥

उभाविति शाट्यायनकं विज्ञायते "कर्म्मसंयोगात्"

उभावप्यनड्वाहौ देयाविति शाट्यायनकं मतं विज्ञायते ब्राह्मणेन । अत्र हेतुः "कर्म(२)संयोगादि"ति। यस्य येन सह कर्मसंयोगः स तद्द्रव्यं लभताम् । उभाभ्यां हि कर्म कृतम् ॥ यथाहुः—"यस्मिन्कर्मणि तद्द्रव्यं यस्य सन्निहितं भवेत् । तत्तस्यैव प्रदातव्यं होतुर्गोत्रपटो यथा" इति २४

इति प्रथमस्य द्वितीया कण्डिका ॥ १ ॥ २ ॥ * ॥

---

## अथ तृतीया कण्डिका—

आतिथ्यायाᳪं सᳪंस्थितायां दक्षिणस्य द्वारबाहोः पुरस्तात्ति-ष्ठन्नन्तर्वेदि देशेऽन्वारब्धे यजमाने पत्न्याश्च "सुब्रह्मण्यो-मि"ति त्रिरुक्त्वा निगदं ब्रूया-"दिन्द्रागच्छ हरिव अगच्छ

---

( १ ) अत्र "ऽग्न्यवयत्नमीषोमौ" इति द्राह्यायणीये पाठः । अग्नीषोमयोर्व्यवधानम-कुर्वन्यथार्थं सुब्रह्मण्यः स्यादिति तद्व्याख्यायां धन्वी प्राह । अत्राग्नीषोमाविरयाहवनीयाग्निं, क्रीतञ्च सोममाह ॥

( २ ) अनडुत्प्रेषणेन कर्मणा सुब्रह्मण्यस्य सयोगात् तत्कर्मान्वयादित्यर्थः । कर्म-संयोगादिति हेतुकथनमन्यत्रापि तत्तत्कर्मान्वितस्य प्रस्तोत्रादेः कुशास्तरणवस्त्रादिदानार्थ-मिति धन्विव्याख्यानम् ॥ अथात्र द्राह्यायणीये अथैतद्राजवाहनं सुब्रह्मण्याय दद्यादिति पठ्यते राजवाहनं सोमवाहकं शकटमनडुद्भ्यां सहैव सुब्रह्मण्याय दद्यात् "अनोयुक्तं सुब्रह्मण्याये"ति-श्रुतेः । इति व्याख्यानं धन्विकृतन्द्रष्टव्यम् ॥

मेधातिथेर्मेष वृषणश्वस्य(१) मेने गौरावस्कन्दिन्नह-
ल्यायै(२)जार कौशिकब्राह्मण गौतमब्रुवाणैता-
वदहे सुत्यामि"ति यावदहे स्यात् ॥ १ ॥

आतिथ्यायामतिथ्यर्थायामिष्टौ संस्थितायां समाप्तायाम् । अत्र "अतिथेर्ञ्यः" ( पा० ५।५।२६ ) इति तादर्थ्येञ्यः आदिवृद्धिः ॥ दक्षिणस्य द्वारवाहोः(३)पत्नीशालायाः । पुरस्तात् पूर्वप्रदेशे तिष्ठन् अन्तर्वेदि देशे यजमाने तत्पत्न्याश्चअन्वारब्धे परस्परं स्पृष्टे सति अध्वर्युसम्प्रैषानन्तरमुद्गाता "सुब्रह्मण्योम्" इति त्रिरुक्त्वा "इन्द्रागच्छे" त्यादिं निगदं ब्रूयात् । तत्र "एतावदहे सुत्यामि"ति पदस्थाने ऊहोयावदहेस्यात्तावतः । अयमर्थः । एतावच्छब्दः संख्योपलक्षणार्थः । संख्याच यावदहे यावत्स्व(४)हस्सु अतीतेषु सुत्या स्यात्तावदिति । तथाच "त्र्यहे सुत्यां" "द्वादशाहे सुत्यामि"त्येवं निगदान्ते प्रयोक्तव्यम् । त्र्यहेऽतिक्रान्ते सु(५)त्यामागच्छेत्येवन्तदर्थः ॥ १ ॥

"अद्ये"ति समानाहनि ॥ २ ॥

सुत्यायाः समानेऽहनि ( यस्मिन्नहनि सुत्या भवति तस्मिन्नहनि एकाहः साध्ये ) अद्येति ब्रूयात् ॥ सुत्यायाः पूर्वदिवसे तु श्वःसुत्यामित्यादेशः ॥ "तस्यान्तेश्वः—सुत्या गौतमस्य" ( १।४।१३ ) इति सिद्धवदनुवादात् । स्पष्टं चाह जैमिनिः "श्वःसुत्यामित्यौपवसथ्येऽह्नि निर्दिशेत्" इति ॥ २ ॥

"देवा ब्रह्माण अगच्छतागच्छतागच्छते"ति गौतमः ॥ ३ ॥

एतावदहे सुत्यामित्यस्यानन्तरं "देवा ब्रह्माणः" इति निगदशेषं ब्रूयात् नान्यत्किञ्चिदिति गौतम आह ॥ ब्रह्मन् शब्दोऽत्रर्त्विग् वचनः ॥ तथाच विश्वप्रकाशः "ब्रह्मा विरिञ्चद्विजयोर्ऋत्विक् चन्द्रार्कयोगयोरि"ति ॥ ३ ॥

---

( १ ) वृषा कामवर्षकः अश्वोऽस्येति वृषणश्वः "वृषण्वस्वश्वयोः" ( पा०१।४।९ वा१ ) इति भसंज्ञायान्नलोपाभावः ॥

( २ ) षष्ठ्यर्थेऽत्र चतुर्थी ( पा० २।३।६२ वा० )

( ३ ) बहुव्रीहिरयं द्वारे बाहू यस्येति । गृहमिति विशेष्यम् ॥

( ४ ) यावदहमिति समाहारे द्विगुसमासः । "यस्य च भावेन भावलक्षणम्" ( पा० २।३।३७ ) इति सप्तमी ॥

( ५ ) सुत्यामिति द्वितीया—अनुलक्षीकृत्येत्यध्याहरति ॥

"आगच्छेतिपूर्वन्देवाह्वानन्धानर्य्यँप्यः ( य्यः ) ॥ ४ ॥

देवा ब्राह्मण इत्यस्मात्पूर्वमागच्छतेति ब्रूयादिति धानर्य्यँप्यः (य्यः) आचार्योमन्यते ॥ सूत्रे एकवचनमेकदेवाभिप्रायकम् ॥ ४ ॥

"आगच्छ मघवन्" इत्येके ॥ ५ ॥

देवाह्वानात्पूर्व"मागच्छ मघवन्नि"ति पदद्वयं प्रयोज्यमित्येके मन्यन्ते । तथैव वयमधीमह इति ॥ ५ ॥

पूर्वयोः प्रणवयोर्विरमेत् ॥ ६ ॥

"सुब्रह्मण्योमि"ति पूर्वयोः प्रणवान्तयोर्विरमेत् विरम्य विरम्याह्वयेत् ६॥

मेने ब्रुवाणयोः ॥ ७ ॥

वृषणश्वस्यमेने गौतमब्रुवाणेति च द्वयोरपि विरमेत् ॥ ७ ॥

षणे जारे चाग्नेय्याम् ॥ ८ ॥

आग्नेय्याम् । अग्निष्टुत्स्वाग्नेयीं सुब्रह्मण्यां वक्ष्यति ( १।४।१ ) तत्र "जातवेदोविचर्षण" इत्यत्र "उषसोजार" इत्यत्र च विरमेत् ॥ ८ ॥

पृथक् यजते शब्देषु ॥ ९ ॥

विरमेदिति वर्त्तते । वक्ष्यमाणायां सनामग्राहं सुब्रह्मण्यायां "यजते शब्देषु" पृथक् विरमेदिति "अत्र पृथग्ग्रहणं पितृ—पितामह—प्रपितामह—शब्दान्तं च समासोमाभूदिति ॥ तथाचामुकस्य पिता यजते इत्येवन्तत्रोह्य प्रयोक्तव्यमित्येवमायाति ॥ ९ ॥

एवं त्रिः ॥ १० ॥

एवं प्रकारेण त्रिवारं क्रिया सुब्रह्मण्यायां भवति ॥ १० ॥

आहूय ॥ ११ ॥

आहूयेति विधिर्गृह्यते एवं सुब्रह्मण्योमित्यारभ्य त्रिराहूय "यज(१)-मानं वाचयेदि"ति शेषः ॥ ११ ॥

पत्नीयजमानावुपहवमिच्छमानौ "सुह्मब्रण्योपह्वयस्वे"ति ॥ १२ ॥

पत्नी च यजमानश्चेत्युभावुपह्वानमुपहवमनुज्ञानमिच्छमानौ काङ्क्षन्तौ । अत्र पदव्यत्यय आ(२)र्षः । ( पा० ३।१।८५ ) "सुब्रह्मण्योपह्व-

---

( १ ) यजमानमिति सामान्यनिर्देशेन तत्पत्न्यपि गृह्यते ॥ वाचनञ्चोपहवानुज्ञापनस्य विवक्षितम् ॥

( २ ) तथाचोक्तमत्र महाभाष्ये "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥ १ ॥ उपग्रहः परस्मैपदात्मनेपदे । नरः पुरुषः । यङ्प्रत्याहारः यङोयशब्दादारभ्य लिङ्याऽशिष्यङ्किति ङकारेण ॥

यस्वे" त्येवं "ब्रूयाताम्" इतिशेषः ॥ १२ ॥

"उपहूत" इत्युपहवः ॥ १३ ॥

एवं याचितः सुब्रह्मण्यः "उपहूतः" इति शब्देनोपहवमुपह्वानमनुज्ञानं दद्यात् ॥ स्त्रिया(१)मुपहूतेति तदर्थः ॥ १३ ॥

उपहूय यथार्थं स्यात् ॥ १४ ॥

उपहूय—पत्नीयजमानयोरनुज्ञामिच्छतोरनुज्ञाङ्कृत्वा यथार्थं सुब्रह्मण्यः स्यात् । यथाप्रयोजनं तिष्ठेद्वा गच्छेद्वेत्यर्थः ॥ १५ ॥

एवँसर्वेषूपसदन्तेषु ॥ १५ ॥

सर्वेषूपसदन्तेषु याः सुब्रह्मण्याः ( निगदवाचः ) अध्वर्युभिश्चोदितास्तासु एवमाह्वयेत् ॥ १५ ॥

याश्चोर्ध्वमुपसद्भ्य उत्करे तु तत्र तिष्ठन् ॥ १६ ॥

ऊर्ध्वमुपसद्भ्योयाः सुब्रह्मण्या अध्वर्युभिश्चोदितास्तास्वप्येवमेवाह्वानं कार्यम् । एष एव विधिः । अयन्तु विशेषः "उत्करे तु तत्र तिष्ठन्नि"ति । उत्करोवेद्युद्धृतमृत्कूटः । तथाचामरः "पुञ्जराशी तूत्करः कूटमस्त्रियामि"ति ॥ नान्तर्वेदिदेश इति भेदार्थकस्तुशब्दः ॥ १६ ॥

प्राक्सुत्यादेशान्नामग्राहः ॥ १७ ॥

एवञ्चैता उत्कारे भवन्ति । किञ्च प्राक्सु० ग्राहोभवति । एतावदहे सुत्यामित्येतस्माद्वचनात् प्राग्यजमानस्य नामग्रहणम्भवतीत्यर्थः ॥१७॥

अग्नीषोमीयवपायाँहुतायाम्, परिहृतासु वसतीवरीषु, प्रातरनुवाकोपक्रमवेलाया-"मसौ यजत" इति प्रत्येकं गृहणीयाद्यजमाननामधेयान्यमुष्य पुत्रः पौत्रोनप्तेति पूर्वेषाम् ॥ १८ ॥—

अग्नीषोमीयस्य पशोर्वपायां हुतायां वसतीवरी(२)परिहरणे ( परिग्रहणे ) कृते, प्रातरनुवाकस्योपक्रमवेलायां यजमाननामधेयानि गृह्णीयात् । प्रत्येकमेकमेकंप्रति । असावितिसर्वनाम्ना यजमाननामधेयपरिग्रहः । यथा "वासुदेवशर्मा यजते" इति । बहुवचननिर्देशात् सर्वाण्येतानि पितृ(३)प्रभृतीनि यजमाननामधेयानि ॥ अन्ये तु व्याचक्षते—

---

( १ ) एतदार्थिकार्थकथनम् ॥ सूत्रेऽन्त्यान्तेऽमः सुः ( पा० ७।३।३९ ) ॥

( २ ) सोमसंस्कारिकाः पर्युषिता द्रव्यान्तरमिश्रिताः कलशस्था नद्यादिभवा आपोवसतीवर्यः ।

( ३ ) अमुकस्य पुत्रोऽमुकस्य पौत्रोऽमुकस्य प्रपौत्र इत्येवम् ।

अथ सत्रेषु नामग्राहे विशेषमाह—प्रत्येकमित्यादि। सत्रेषु(१)यावन्ति यजमानानां नामधेयानि तानि प्रत्येकं पृथगेव गृह्णीयात्। न समासनिर्देशः कार्यः। तेन "नारायणोयजते वासुदेवोयजते" इति पृथक् पृथगेव ग्रहणमिति ॥ (२)पूर्वेषामिति ह्येकशेषनिर्देशः पूर्वासामपि। यजमानपित्रादीनामिव मात्रादीनाम्। तथाच यज्ञस्वामिनः पुत्रोयजते, वासुदेवस्य पौत्रोयजते, नारायणस्य नप्ता यजते। एवमेव "दाक्ष्याः पुत्रोयजते" एवम्पूर्वपूर्वस्त्रीव्यक्तीनामपि नामग्राहः कार्योयथा(३)योग्यमिति १८

अथावरेषां यथाज्येष्ठंस्त्रीपुंसानां ये जीवेयुः ॥ १९ ॥

अवरेषां त्रयाणां पुत्र पौत्र-नप्तॄणांस्त्रीपुंसरू(४)पाणां जीवतां यथाज्येष्ठं नामानि गृह्णीयात्। "अमुष्य पिता यजते, पितामहोयजते, प्रपितामहोयजते" इति ॥ यथाज्येष्ठमिति वचनात् पुत्रवर्गं समाप्य पौत्रवर्गे नामग्रहणम्। पुत्रवर्गेऽपि यदिदुहिता ज्येष्ठा स्यात्तदा तस्याः प्रथमं ग्रहणमिति। स्त्रीपुंसानामिति। अत्र षण्ढस्य(५) नग्रहणं, पतितस्यापि न, यजमानसुकृते तस्य भागित्वाभावात् ॥ १९ ॥

"जनिष्यमाणानामि"त्युक्त्वा सुत्यादेशप्रभृति समापयेत् ॥२०॥

जनिष्यमाणानां पिता पितामहः प्रपितामहोयजते" इतिपाठाभावेऽपि सामर्थ्याद्रूह्यते। तथैव च जैमिनिना स्पष्टमेव पठितम् "जनिष्यमाणानां पितापितामहः प्रपितामह-इत्युक्तमसमाहरेदि"ति ॥ तत्रजनिष्यमाणानामिति वर्गत्रयस्यापि तन्त्रेण निर्देशः पृथगनुपादानात् इति।

---

(१) अन्ये तु सत्रप्रसङ्गाभावात्सूत्रमन्यथा व्याचक्षते। कथ ? यजमानस्य त्रीणि नामधेयानि, अभिवादनीयं व्यावहारिकं जन्मनक्षत्रनामेतिच। तानि प्रत्येकं सर्वाण्यपिगृह्णीयात् यथा दर्शपूर्णमासयोः सूक्तवाकनिगदे "आशास्तेयजमानोऽसावि"त्यत्र यजमानस्य द्वयोर्नामधेययोर्ग्रहणम्। आश्वलायनोऽप्यभ्यधत्त "असावसावित्यस्यादिश्य नामनी"इति तद्वदिति। तदेतद्बुद्धैर्विमृश्यमिति ॥

(२) यजमानस्य पितृपितामहप्रपितामहानामपि नामधेयानि गृह्णीयात्। एवं मात्रादीनामपीत्यर्थः ॥

(३) यजमानसुकृते बन्धूनाम्भागित्वार्थोहिनामग्राहः। बन्धुत्वञ्च स्त्रीणामप्यविशिष्टमिति ॥ अत्रेदं बोध्यम्। अग्नीषोमीयवपायामित्यादिस्थानत्रयोपादानं परिसंख्यार्थम्। एतष्वेव नामग्राहोनान्यत्रेति। तेन हविर्द्धानप्रवर्त्तनाग्नीषोमप्रणयनयोः सुब्रह्मण्याह्वानपक्षे नामग्राहोन भवति। इति ॥

(४) अत्रस्त्रीपुंसानामिति बहुवचनगर्भद्वन्द्वादच्समासान्तः ( पा० ५।४।७७ ) ॥

(५) नपुंसकस्य।

एवमुक्त्वा तदनन्तरं सुत्यादेशप्रभृति "श्वः सुत्यामागच्छ" इति निगदशेषं समापयेदिति ॥ २० ॥

अथ विकृतिषु सुब्रह्मण्यायां विशेषविधानमुपक्रमते—

याऽग्नीषोमीयवपायां, लुप्ता सा साद्यस्क्रेषु ॥ २१ ॥

अत्र "विहिता" इतिशेषः। याऽग्नीषोमीयवपायां विहिता सुब्रह्मण्या सा साद्यस्क्रेषु लुप्ता वेदितव्या। अयमर्थः। साद्यस्कनामधेयाः सोमयागविकृतय एकाहास्तत्रअग्नीषोमीयपशोः स्थाने अग्नीषोमीयं पुरोडाशं निर्वपयतीति। तत्र तत्स्थानापन्नत्वादग्नीषोमीयवपाकाला सुब्रह्मण्या प्राप्ता सा हि अग्नीषोमीयपशुहोमे आज्यभागयोर्हुनयोर्वपाहोमकाले विधीयते। तत्र "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायेन सा स्थाननिमित्तापायाल्लुप्यत एव न विधीयत इति ॥ २१ ॥

इति प्रथमस्य तृतीया कण्डिका ॥ १ ॥ ३ ॥ * ॥

## अथ चतुर्थी कण्डिका ॥

अग्निष्टुत्स्वाग्नेयोनिगदः ॥ १ ॥

सुब्रह्मण्याया इष्टेः सार्वक्रतुकोविधिरुक्तोविशेष उच्यते-अग्निष्टुत्स्विति। अग्निष्टुतोनामैकाहाः सोमविकृतयस्तेषु आग्नेयोऽग्निदेवत्यानिगदः स्यात्?

तत्र गौतमीयम् "अग्न आगच्छ रोहिताभ्यां, बृहद्भानो ! धूमकेतो ! जातवेदोविचर्षण ! आङ्गिरसब्राह्मणाङ्गिरसब्रुवाण" इति प्राक्सुत्यादेशात् ॥ २ ॥

तत्र गौतमीयं-गौतमस्येदं मतम् "उच्यत" इति शेषः। अग्न आगच्छेत्येतदादिर्निगदः। प्राक्सुत्यादेशात्। एतावदहे सुत्यामित्यतः प्राक् भवतीत्यर्थः ॥ २ ॥

देवानाᳪंस्थानेऽग्नयः ॥ ३ ॥

तत्राग्नेये निगदे देवानां स्थाने "देवा ब्रह्माणः" इत्यत्र "अग्नयोब्रह्माण आगच्छत" इति ॥ ३ ॥

अथ धानञ्जप्यो (य्यो)-"ऽग्ने ? आगच्छ रोहितव ? आगच्छ भरद्वाजस्याज ? महमः सूनो ? वारावस्कान्दिन्नुषसोजार ? " इति। आङ्गिरसप्रभृति समानम् ॥ ४ ॥

धानञ्जप्य (य्य ) स्तु "जातवेदोविचर्षण" इत्येवमन्तस्य स्थाने "अ-

ब्रआगच्छ रोहितवआगच्छ"इत्येवंपठितन्निगदमाह॥ "आङ्गिरसब्रुवाण" इत्यादिकमुभयोराचार्ययोर्मतं समानम् ॥ ४ ॥

इन्द्रं शक्रेति ब्रूयाद्विश्व इति देवाननिरुक्तेषु ॥ ५ ॥

उपहव्यप्रभृतयः केचिदेकाहा अनिरुक्ता भवन्ति । अनिरुक्तलक्षणं च वक्ष्यति "उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुरि"त्यादि (८।९।१) तेष्विन्द्रपदमपोह्य शक्रपदं प्रयुञ्जीत । देवा इति पदमपोह्य विश्वे इति ब्रूयात् । शक्रागच्छ विश्वे ब्रह्माणआगच्छत' इति ॥ ५ ॥

अनिरुक्तप्रातः सवनयोश्च ॥ ६ ॥

एवमेव सुब्रह्मण्या स्यात् । अनिरुक्तं प्रातः सवनं यस्य सोऽनिरुक्तप्रातःसवनोवाजपेयः । प्रजापतेरपूर्वश्चैकाहः । तयोर्द्वयोरपि तथेन्द्रंशक्रेति ब्रूयाद्विश्व इति देवान् इति । ननु च पूर्वेणैव सिद्धमेतत् । नैवम् । उत्तरयोः सवनयोर्द्वयोरपि निरुक्तत्वात् "भूयसाव्यपदेशोभवति मल्लग्रामवदि"ति न्यायेन निरुक्तधर्मः स्यात् तन्निवृत्त्यर्थमिदं सूत्रं, भूयस्त्वान्मुख्यत्वं प्रबलमिति सू कारमतमिति ॥ ६ ॥

अभिषेचनीयदशपेयावन्तरेण सदा नामग्राहः ॥ ७ ॥

राजसूये अभिषेचनीयदशपेययोः सुत्ययोरन्तराले दशाहानि भवन्ति । तत्र याः सुब्रह्मण्यास्ताः सर्वाः सनामग्राहाः । "अन्तराऽन्तरेण युक्त" ( पा० २.३।४ ) इति (१)षष्ठ्यर्थे द्वितीया। निगदवाक्ये नामग्राहः कार्य इत्यर्थः । सदाग्रहणंसत्राद्यपेक्षम् । अपरे ब्रुवते नामग्राहमात्रमिदं विद्यते न निगदइति ॥ ७ ॥

अहर्गणेष्वहराद्यन्तयोराह्वयेत् ॥ ८ ॥

द्विरात्रप्रभृतिष्वहर्गणेषु अह्न आदौचान्ते चाह्वयेत् । अहरादिः प्रातरनुवाकोप्रक्रमकालः।वसतोवरी ग्रहणकालोवा । अहरन्तंस्वयमेव वक्ष्यति । तत्राहरन्तेष्वध्वर्युसंप्रैषाभावादप्राप्तं विधीयते । अहरादिग्रहणं दृष्टान्तार्थम् । यथा प्रातरनुवाकोपक्रमे देवताऽऽगमनार्थमाह्वानमेवमहरन्तेष्वप्यवश्यं कार्यम् । अध्वर्युसंप्रैषाभावोऽपि मैत्रावरुणस्यातिप्रेषमन्त्रेण प्रेषितत्वादितिभावः ॥ ८ ॥

ननु संस्थिते ( समाप्ते ) किमर्थमाह्वानमत आह—

उत्तरार्थाऽऽहरन्तिकी ॥ ९ ॥

---

( १ ) उपपदविभक्तीनां सम्बन्धोऽर्थः षष्ठ्यपवादत्वात् । उत्सर्गसमानदशाह्यपवादा भवन्ति ॥

अहरन्ते भवा आहरन्तिकी सा सुब्रह्मण्योत्तरदिवसार्थाऽऽवश्यङ्कार्या । उत्तरार्थेतिवचनादन्तेष्वहःसु न भवन्ति । तत उत्तराभावादिति । अत्र "कालाट्ठञ्" ( पा० ४।३।११ ) इति ठञ् प्रत्ययः । ठस्येकः । आदिवृद्धिर्ङीप् ॥ ५ ॥

अग्नीषोमीयप्रभृत्यहीनेषु सर्वाः सनामग्राहाः ॥ १० ॥

अहीनेषु अहर्गणसाध्यसुत्याकेषु क्रतुषु अग्नीषोमीयवपाप्रभृति यत्कर्म तत्र सप्तम्या लुगार्षः सर्वाः सुब्रह्मण्याः सनामग्राहाः स्युः । ननु अतिदेश(१)सिद्धमेतत् । नैवम् । आहरन्तिकीष्वप्राप्तेस्तदर्थं सर्वा इति विधानमिति ॥ अत्र भवार्थे "अह्नः खः क्रतौ" (पा० ४।२।४३ वा०) इति खस्तस्येनादेशः । ( पा० ७।१।२ ) ॥ १० ॥

दीक्षानुपूर्व्येण दीक्षितानां सत्रेषु नामग्राहः ॥ ११ ॥

आहीनिको विधिरुक्तः । साम्प्रतं सा(२)त्रिक उच्यते—दीक्षानुपूर्व्येणेति । सत्रेषु येनानुपूर्व्येण दीक्षिताः सत्रिण(३) स्तेनैव क्रमेण तेषां सुब्रह्मण्यायां नामग्रहणं स्यात् ॥ आनुपूर्व्यं क्रमः ॥ ११ ॥

ऊर्ध्वमतिरात्रादग्रहणम् ॥ १२ ॥

सत्रेष्वित्यनुवर्तते । सत्रेषु प्रायणीयातिरात्रस्य प्रातरनुवाकपर्यन्तमेव नामग्रहणम् । ततः ( प्रायणीयादतिरात्रात् ) ऊर्ध्वमग्रहणं नाम्नाम् । अत्राहरन्तेष्वपि विधानादेवाग्रहणस्य सिद्धत्वादहरादौ निषेधोऽयम् ॥ १२ ॥

तस्यान्ते श्वःसुत्या गौतमस्य ॥ १३ ॥

तस्य (४)प्रायणीयस्यान्ते या वसतीवरीपरिहरणान्तकाला सुब्रह्म-

---

( १ ) अतिदेशश्च "प्रकृतिवद्विकृतिः कर्तव्येति" ॥

( २ ) तिस्र एवसोमजातयः । एकाहाहीनसत्राणीति । नास्ति चतुर्थी ।

( ३ ) य एव यजमानास्त एवात्विजो भवन्ति । षोडश साग्नयश्चायमेतत्सत्रमदक्षिणं भवति द्वादशाहप्रभृति ।

( ४ ) पूर्वेद्युरुपक्रान्तोऽतिरात्रोद्वितीयेऽह्नि प्रातः काले समाप्यते स प्रायणीय इत्युच्यते तस्यान्ते या सुब्रह्मण्या द्वितीयदिवसार्था तत्र "श्वःसुत्यामागच्छे"ति निर्देशः कार्यः, इति गौतमोमन्यते ॥ प्रयान्त्यहान्यनेनेति प्रायणं तत्र भवं प्रायणीयम् । एवमुदयन्त्यहान्यनेनेत्युदयनन्तत्र भवमुदयनीयम् "तत्र भवः" ( पा० ४।३।५३ ) इत्यर्थे "वृद्धाच्छः" ( पा० ४।२।११४ ) इति छस्तस्येयादेशः । (पा० ७।१।२) प्रायणस्य वृद्धत्वं "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" (पा० १।१।७३) इति । उदयनस्यतु ( वृद्धत्वं ) नामधेयत्वात् (पा० १।१।७४ वा०) इति बोध्यम् ।

ण्या तस्यां "श्वःसुत्यामागच्छ" इति ब्रूयात्। तस्येति निर्देशः क्रियते अहीन-द्वादशाह-वैदत्रिरात्राद्यर्थस्तस्य तस्येति ॥ १३ ॥

नार्म्मेधान्त एके ॥ १४ ॥

एके आचार्य्या मन्यन्ते श्वः सुत्यासंयुक्ता नार्म्मेधान्ता (१)सुब्रह्मण्या स्यादिति। अहराद्या अद्यसुत्या स्यादित्यर्थः ॥ नार्म्मेधं नाम साम नृमेधशब्दघटितमुच्यते। तदस्मिन्वर्त्तत इत्यर्थेऽत्राण्, आदिवृद्धिः ॥१४॥

अद्य सुत्या शाण्डिल्यस्य ॥ १५ ॥

तस्यान्त इत्यनुवर्त्तते। प्रायणीयस्यातिरात्रस्यान्ते "अद्य सुत्याम्" इति निर्दिशेत्। इति शाण्डिल्य आचार्यो मन्यते। तदानीमेव द्वितीयसुत्यारम्भात्। यः पुनरतिप्रेषमन्त्रे श्वःसुत्येति पाठः स तु सर्वासामुत्तरसुत्यानां श्व श्व एवारम्भात्तदभिप्रायः। न तु द्वितीयदिवसाभिप्राय. अत्राद्य सुत्येत्यूह एव कार्य इति ॥ १५ ॥

अनाह्वानं धानञ्जप्य (य्यः) तिसृषु चोत्तमासु नामग्राहः ॥१६॥

तस्यातिरात्रस्यान्तेऽनाह्वानमेवेति धानञ्जप्य (य्य) आचार्योमन्यते कुतः? सर्वथाऽनुपपत्तेः। अतिप्रेषे तावत् श्वःसुत्यामिति पाठाद्य सुत्यामित्यनुपपन्नम्। तदानीमेवारम्भात् श्वःसुत्यामिति चानुपपन्नम्। तेनानाह्वानमेव युक्तमिति। तिसृषु च सत्रोत्तमासु-अन्त्यासु सुब्रह्मण्यासु नामग्राहः स्यादित्यपि शाण्डिल्य एव मन्यते। अत्र मूलं मृग्यम् ॥ १६ ॥

उत्तमयोरिति गौतमः ॥ १७ ॥

सत्रोत्तमयोः सुब्रह्मण्ययोर्नामग्राहः स्यादिति गौतम आचार्योमन्यते एतस्मिन्कल्पे ॥ १७ ॥

तथा सत्यग्नीषोमीयवपायामग्रहणं धानञ्जप्यो (य्यो)ऽनाह्वानं वा॥१८॥

यदि सत्रसमाप्तौ द्वयोरेव सुब्रह्मण्ययोर्नामग्राहस्तथा सति पुरस्तादपि द्वयोरेव नामग्राहः। नाग्नीषोमीयवपायामित्यर्थः। यथाप्रायणं तथैवोदयनं युक्तमभिमतमिति ॥ अथवाऽनाह्वानमेव, समाधिप्रधानत्वादित्यग्निस्वामिनः ॥ १८ ॥

सर्वत्र सत्रेष्वग्रहणं शाण्डिल्यः ॥ १९ ॥

सर्वत्र सर्वासु सुब्रह्मण्यासु सत्रेष्वग्नीषोमीयप्रभृत्यासमाप्तेर्न क्वचि-

---

(१) अथात्र धन्विव्याख्यानम् "एके पुनरतिरात्रस्य नार्म्मेधसामसमाप्तौ उक्थ्यपर्यवसाने आहरन्तिकी सुब्रह्मण्यामकृष्य कुर्यादित्याहुः। उत्तरेष्वहस्सु तथाकरणात्। तथा सति श्वः सुत्यामिति निर्देशः समञ्जस एवेति।

दपि नामग्रहणमिति शाण्डिल्य आचार्यो मन्यते ॥ १९ ॥

ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे ॥ २० ॥

प्रायणीयादतिरात्रादूर्ध्वमेका सुब्रह्मण्याऽऽग्नेयी भवेत्। द्वितीये प-(१)ञ्चदशरात्रे ॥ २० ॥

द्वे वा ॥ २१ ॥

द्वे वा सुब्रह्मण्ये आग्नेय्यौ भवेताम् ॥ २१ ॥

सर्वाः प्राक्त्रिकद्रुकेभ्यस्तृतीये ॥ २२ ॥

तृतीये पञ्चदशरात्रे आतिथ्यासंस्थानकालाया आरभ्य याः सुब्रह्मण्यास्ताः सर्वा आग्नेय्यः स्युः। प्राक् त्रिकद्रुकेभ्यः। अयमर्थः। तृतीये पञ्चदशरात्रे प्रथममहरग्निष्टुत्। तदनन्तरं ज्योतिर्गौरायुरिति त्रीण्यहानि त्रिकद्रुक इति संज्ञकानि भवन्ति। तत्र त्रिकद्रुकेभ्य. प्राक् सर्वाः सुब्रह्मण्या उपसत्कालीना अप्याग्नेय्य (२)एव स्युरग्निष्टुतोमुख्यत्वादिति। भूयस्त्वान्मुख्यत्वं प्रबलमिति सूत्रकारस्यपक्षः। जैमिनिश्चाह—"मुख्यं वा पूर्वचोदनाल्लोकवदि"ति ॥ २२ ॥

कौण्डपायिनतापश्चितयोर्द्वादशाहे सुत्येति विदित्वा परिमाणाह्वानं धानञ्जप्यः(य्यः) ॥ २३ ॥

कौण्डपायिनामयनं कौण्डपायिनं, तापश्चितामयनं तापश्चितं, तयोर्द्वन्द्वः। तयोर्द्वादशाहे सुत्येतिज्ञात्वा परिमाणाह्वानं धानञ्जप्यो(य्यो)मन्यते। एतावदहे सुत्यामिति यावदहे स्यादित्युक्तम्(३) (१।३।१) ॥२३॥

---

(१) अयं भावः। द्वितीयस्य पञ्चदशरात्रस्य द्वितीयमहरग्निष्टुद्भवति। "अग्निष्टुत्स्वाग्नेयोनिगदः" इति (१।४।२) वचनादत्राग्नेयी सुब्रह्मण्या कार्या। अग्निष्टुद्व्यतिरिक्तेष्वहस्सु प्रकृतिवदैन्द्री सुब्रह्मण्येत्यसन्दिग्धं, या पुनरुपसद्दिवसेषु सर्वसुत्यासाधारणी सुब्रह्मण्या सा किमाग्नेयी स्यादैन्द्री वेति संशये—इदमुच्यते ऊर्ध्वमतिरात्रादग्निष्टुत् एवासाधारणी केवलमेका सुब्रह्मण्याग्नेयी स्याद्द्वेवेति परिसंख्यानमेतत्। तेनोपसत्कालीनाः सर्वा ऐन्द्र्य एव स्युः। ऐन्द्राणामह्नां भूयस्त्वान्मुख्यत्वाच्चेति। अतिरात्रे धानञ्जप्यमतेनाभावादेकाऽऽग्नेयीत्युक्तम्। गौतमादिमतेनाह्वानाद्द्वेवेत्युक्तमित्येवं दीपे धन्वी प्राह।

(२) आग्नेयीति पदं पूर्वसूत्रादनुवर्त्य बहुवचनेन विपरिणमनीयम् ॥

(३) अयं भावः। कुण्डपायिनामयने द्वादशभिरुपसद्भिश्चरित्वा तदनन्तरं हविर्यज्ञैः षण्मासानतीत्य सुत्या भवति। तथा तापश्चिते सत्रे संवत्सरमुपसदोभवन्ति। तदनन्तरं सुत्या। उभयोरपि सत्रयोः प्रथमामुपसदमारभ्य सुत्यायाः प्रागेतावदहे सुत्यामिति परिमाणाह्वानं कार्यम्प्रकृतिवदिति प्राप्ते—इदमुच्यते—कौण्डपायिनेत्यादि। द्वादशाहेऽतिक्रान्ते सुत्या भविष्यतीति ज्ञात्वा परिमाणाह्वानं कार्यम्। ततः पूर्वमितराः सुब्रह्मण्याः केवलं सु-

"सुत्यामागच्छे" तीतरा: ॥ २४ ॥

अथ या अन्याः प्राक्परिमाणाह्वानाम्नानात् कोविधिरत्रोच्यते-सुत्यामागच्छेतीतरा इति ॥ २४ ॥

ऊर्ध्वञ्चातिरात्रात् प्रथमस्य सारस्वतस्य, प्राक् श्वःसुत्यायाः॥२५॥

सुत्यामागच्छेत्यनुवर्त्तते। प्रथमस्य सारस्वतस्य पर्वणि पर्वणि सुत्या तदन्तरालदिवसेष्विष्ट्ययनमिति स्थितिः। तत्रापि प्रथमसुत्याया-ऊर्ध्वमिष्ट्ययनदिवसेष्वन्त्यवर्ज्जं सुत्यामागच्छेत्येव निर्दिशेत्। न परिमाणाह्वानं कुर्यादित्यर्थः। सुत्यायाः पूर्वदिवसे तु श्वः सुत्यामिति निर्दिशेत् "प्राक् श्वःसुत्याया" इति वचनात् ॥ २५ ॥

ननु च इष्ट्ययनदिवसेषु सुब्रह्मण्याह्वानं नास्त्येव, अविहितत्वात्। असति चाह्वाने कथन्तत्प्रकारवचनमत आह—

कौण्डपायिन-सारस्वतयोरिष्ट्ययने तु सुत्यावच्छाण्डिल्यः ॥२६॥

इष्ट्ययनदिवसेष्वपि सुत्यादिवसेष्वाद्यन्तयोराह्वानं तत्तत्सुत्यार्थम्। इष्ट्ययनदिवसेष्वागामिसुत्यार्थमिति। शाण्डिल्यग्रहणं पूजार्थम् ॥२६॥

तथाऽग्निहोत्रमासे तथाऽग्निहोत्रमासे ॥ २७ ॥

कुण्डपायिनामयने अग्निहोत्रमासेऽपि तथैवाद्यन्तयोरह्नोः सुब्रह्मण्याह्वानं भवतीति ॥ तथेति पुनर्वचनम्प्रथमपटलसमाप्तिसूचनाय। अन्तेऽभ्यास इति हि नैगमोनयः ॥ २७ ॥

इति प्रथमस्य चतुर्थी कण्डिका ॥ १ ॥ ४ ॥ * ॥

( प्रथमः पटलः सामाप्तः )

## अथ पञ्चमी कण्डिका—

एवं सुब्रह्मण्यीयङ्कर्मोक्त्वा प्रस्तोतृकर्म्म विवक्षुरिदं सूत्रमारभते—

सर्वत्रानादेशे परिसामानि प्रस्तोता गायेत् स्वाध्यायवत्स्वासु ॥१॥

सर्वत्र सर्वक्रतुषु अनादेशे आदेशादन्यत्र। आदेशो यथा "अयं स हो हा इति त्रिरुद्गाता गायेत" इति। यानि बहिः स्तोत्रमङ्गतया प्रयुज्यन्ते तानि परिसामानि परिच्छिन्नकर्तृकाणि परिगतलिङ्गानि वा सामानि।

---

त्यामागच्छेत्याह्वयेत्। प्रकृतौ द्वादशाहे तथैव परिमाणानिर्देशादिति धानञ्ज्यप्याभिप्रायः। प्रथमामुपसदमारभ्यैव परिमाणाह्वानमिति सूत्रकारस्य मतम्। कुतः ? मूलप्रकृतौ ज्योतिष्टोमे तथैव विधानात्। तत्र यथान्यहे सुत्यामिति दृष्टमपि परिमाणाह्वानमार्थिकत्वात्तापश्चितादौ न भवतीति।

यान्येतानि तार्क्ष्यसामादीनि उद्वंशीयान्तानि दीक्षणीयादिषूदवसनीयान्तेषु कर्मसूपदिश्यन्ते तानि कर्मभूतानि स्वासु स्वकीयास्वृक्षु । स्वाध्यायवत् । यथा(१)ध्ययनं प्रस्तोतैव गायेत् ॥ १ ॥

तृचापत्तीनि तृचेषु त्रिरितराणि ॥ २ ॥

तिसृणामृचां समाहारस्तृचम् "ऋचित्रेरुत्तरपदादिलोपश्चच्छन्दसि" ( पा० ६।१।३४ वा० ) इति त्रिशब्दस्य सम्प्रसारणं, पूर्वरूपत्वञ्च (पा० ६।१।१०८) "ऋक्पूरब्धू." ( पा० ५।४।७४ ) इत्यादिना समासान्तोऽच्प्रत्ययः । तदापन्नानि तृचापत्तीनि । कर्मणि संज्ञायां क्तिन् (पा० ३।३।९४ ) तृचस्थानि रथन्तरादीनि परिसामानि, तानि स्वासु तृचेषु तिसृष्वपि ऋक्षु गायेत् । इतराणि—एकर्चापत्तीनि ऋग्गृहीतानि च प्रजापतेर्हृदयादीनि तानि त्रिस्त्रिर्गायेत् ॥ २ ॥

अन्तरेण चात्वालोत्करौ सञ्चरः सर्वत्रानादेशे ॥ ३ ॥

चात्वालोत्करावध्वर्युप्रसिद्धौ, तयोरन्तरेण "अन्तरान्तरेण युक्ते" (पा० २।३।४) इति षष्ठ्यर्थे द्वितीया ॥ मध्यदेशेन सञ्चरः । सञ्चरन्त्यनेनेति करणे घान्तोनिपातः ( पा० ३।५।११९ ) । मा ः । सर्वत्र सर्वासु क्रतुषु । सर्वकर्मणामित्यग्निस्वामिनः । अनादेशे आदेशादन्यत्र । सत्यादेशे यथादेशमेव निष्क्रामेदित्यर्थः । सर्वत्र ग्रहणं तस्मादेतेनैव प्रसुते प्रपद्येतैतेन निष्क्रामेदिति सुत्यायामेव केवलं माभूदिति ॥ ३ ॥

तदाम्नानं तीर्थम् ॥ ४ ॥

चात्वालोत्करयोर्यन्मध्यन्तदाम्नानसंज्ञकं तीर्थं सञ्चरमार्गः । तरन्त्यनेनेतिकरणे थक् (उ. २।७) संज्ञाकरणं व्यवहारार्थम् । "योभूयोजिगमिषेदाम्नानेन स गच्छेत्" इति । "दक्षिणं नयेयुस्तीर्थेनेति" दर्शनात्तीर्थमिति पृथक् संज्ञापीति गम्यते ॥ ४ ॥

अग्नौ चीयमाने पश्चिमेन पुच्छङ्गत्वा दक्षिणेऽपिकक्षे तिष्ठेद्यत्र वोपदध्युः ५

अग्निचित्यायामिदङ्कर्मोपदिश्यते । चीयतेऽसौ चीयमानः वर्त्तमाने कर्मणि लटः (पा० २।३।१३३) शानच्चि मुक् । अध्वर्युभिरग्नौ चीयमाने सति पश्चिमेन पश्चिमेअदूरे । एनबन्तमेतत् (पा०५।३।३५) न तृतीयान्तम् । अत्र पुच्छमिति षष्ठ्यर्थे द्वितीया (पा०२।३।०१) । गत्वा दक्षिणे अपिकक्षे तन्नामके स्थानविशेषे तिष्ठेत् । यत्र यस्मिन् वा देशे उपदध्युः, अध्वर्यवउपधानमिष्टकानाङ्कुर्युः । अयन्देशोपदेशो नोर्ध्वतोपदेशः ॥ ५ ॥

---

( १ ) मध्यमस्वरेणेत्यर्थः ।

अथ कोयमपिकक्षोनाम प्रदेशस्तत्राह—

पश्चिमेन पक्षौ अपिकक्षौ ॥ ६ ॥

अत्रापि पक्षावित्ये-नबन्तयोगे द्वितीया (पा० २।३।३१) पक्षयोरग्नेः पश्चिमौ प्रदेशावपिकक्षनामानौ दक्षिणोत्तरक्रमेण व्यवस्थितौ भवतः ॥ ६ ॥

पूर्वेणोपप्लुवौ ॥ ७ ॥(१)

पक्षावित्यनुवर्त्तते। अग्निपक्षयोः पूर्वौद्वौ प्रदेशौ तावुपप्लवनामानौ भवतः। वक्ष्यति च"उत्तरे चोपप्लवे स्वं हृदयमालभ्य प्रजापतिहृदयमि"ति ॥ ७ ॥ (१-५-२२)

उक्तमग्नौ चीयमाने पश्चिमेन पुच्छं गत्वा दक्षिणे अपिकक्षे तिष्ठेदिति। अथ तस्मिन्देशेऽवस्थितस्य किङ्कर्मेत्यत्रोच्यते—

पुष्करपलाश उपधीयमाने हिरण्मये पुरुषे स्वयमातृण्णासु च शर्करासु व्याहृतिसामानि गापयेत यजमानं"सत्यं पुरुषोभूर्भुवः स्वरि"त्येतासु पञ्चसु पृथक् ॥ ८ ॥

प्रथममध्यमोत्तमासु तिसृषुचितिषु पुष्करं पद्मं तस्य पलाशे पत्रे उपधीयमाने स्थाप्यमाने। हिरण्मये (२) सुवर्णमये पुरुषे उपधीयमाने स्वयमातृण्णासु (३) स्वभावभिन्नासु पञ्चसु शर्करासु पञ्चस्विष्टकासु उपधीयमानासु"सत्यं पुरुषो भूर्भुवः स्वः"इत्येतासु पञ्चसु व्याहृतिषु भवानि समानि व्याहृतिसामानि प्रस्तोता क्रमेण पृथक् (४) यजमानं गापयेदित्यर्थः॥ ८ ॥

तेषां स्थाने स्वयं चिन्वान ऋतनिधनमाज्यदोहं, पुरुषव्रतमेकानुगानं रथन्तरं, वामदेव्यंबृहदिति ॥ ९ ॥

चिन्वान इति सप्तम्यन्तम्। "अध्वर्यु-र्यजमानोवा स्वयं चिनुयादि"ति यजमानस्य चयनं विकल्पेन विहितं यजमाने स्वयं चिन्वाने (५)चयनंकुर्वा-

---

(१) उपप्लयाविति पाठोऽग्निस्वामिभाष्यपुस्तके कलिकातामुद्रिते यान्तः। द्राह्यायणीये वान्तः।

(२) निपातितोऽयम् "दाण्डिनायने" (पा० १।४।१७४) त्यादिसूत्रे ॥

(३) "उतृदिर् हिंसानादरयोः" क्तस्यदस्यचनः ॥

(४) एकस्मिन्नेकस्मिन्नुपधीयमाने एकमेकं साम गापयेत्प्रतिद्रव्यमानुपूर्व्येण ॥

(५) स्वयं चिन्वान इति सात्रिकाविधिरुपदिश्यते। तस्मिन्नेतानि यथोद्दिष्टानि भवन्ति ॥

णे सति तेषां व्याहृतिसाम्नां स्थाने आज्यदोहादीनि पञ्च सामानि यजमानमेव गापयेत्प्रस्तोता । ऋतनिधनमित्याज्यदोहविशेषणम् । एकानुगानमिति पुरुषव्रतविशेषणम् । केचित्तु स्वयं चिन्वान इतिप्रस्तोतुर्विशेषणमित्याहुः । तदयुक्तम् । प्रस्तोतुश्चयनविध्यभावात् ॥ ९ ॥

**रथन्तरप्रभृतीनि विकल्पन्ते लोकसामभिरावृत्तैः ॥ १० ॥**

रथन्तरं वामदेव्यं बृहदिति त्रीणि सामानि विकल्पन्ते लोकसामभिरावृत्तैः (१) प्रतिलोमैरित्यर्थः ॥ १० ॥

**सञ्चितमग्निं दक्षिणेन गत्वाऽ"ग्न आयूंषी"ति प्रत्यङ्मुखस्तिष्ठंश्छिरसि गायत्रं गायेन्निरुक्तम् ॥ ११ ॥**

चीयमाने गानमुक्तम् इदानीं सञ्चितगानमुच्यते-सञ्चितः समस्तश्चितस्तं,सञ्चितमग्निं दक्षिणेन अग्नेर्दक्षिणे गत्वा शिरसि अग्निशिरः समीपे प्रत्यङ्मुखस्तिष्ठन् "अग्नआयूंषी" ति एतस्यामृचि त्रिर्गायत्रंसामगायेत् । (२) निरुक्तम् प्रत्यक्षमृगक्षरेणैव । तथा गानमेव निरुक्तगानमुच्यते । अनिरुक्तगानन्तु केवलं प्रणवेनैव गानमिति व्यक्तमुपरिष्टात् । ॥ ११ ॥

**प्रत्याव्रज्य रथन्तरं दक्षिणपक्ष उदङ्मुखः पश्चाद्वा प्राङ्मुखः ॥ १२ ॥**

प्रत्याव्रज्य· येनैव गतस्तेनैव परावृत्य दक्षिणपक्षे उदङ्मुखस्तिष्ठन्रन्तरं साम गायेत् । पश्चाद्वा पक्षस्य तिष्ठन् प्राङ्मुखोगायेत् ॥ १२ ॥

**पश्चिमेन पुच्छे गत्वा बृहदुत्तरे पक्षे दक्षिणामुखः पश्चाद्वा प्राङ्मुखः ॥ १३ ॥**

अत्र तिष्ठन् इत्यनुवर्त्तते यथोत्तरम् । पश्चिमेन पुच्छं गत्वा उत्तरस्य पक्षस्य समीपे दक्षिणामुखस्तिष्ठन् बृहत् साम गायेत् । पश्चात् पश्चिमे वा प्रदेशे तिष्ठन् प्राङ्मुखोगायेत् । तिष्ठन्नित्यूर्ध्वता ॥ १३ ॥

**प्रत्याव्रज्य यज्ञायज्ञीयं पुच्छे सर्व्वैंरमरश्चेद्दैक्षः सौत्योवा ॥ १४ ॥**

बृहद्गानानन्तरं प्रत्याव्रज्य पुच्छे पुच्छस्य पश्चात् (पश्चिमे प्रदेशे) तिष्ठन्

---

(१) आर्षेयब्राह्मणे त्रीणि लोकानां व्रतानि दिवोऽन्तरिक्षस्य पृथिव्या इति लोकसामानि दर्शितानि । "मन्येवां द्यावापृथिवी सुभोजसौ" इत्यस्यामृचि प्रथमं लोकसाम वाग्वागीयम् । "कयानश्चित्र आभुवत्" इति द्वितीयम् । पुनश्च "मन्ये वाम्" इत्येतस्यामेवर्चि "प्रतिष्ठासि प्रतिष्ठा" इतिस्तोभोपक्रम तृतीय लोकसाम तत्र प्रतिलोमैरिति बचनात्तृतीयरथन्तरयोर्विकल्पः । द्वितीयवामदेव्ययोर्विकल्पः प्रथमबृहतोर्विकल्पः ।

(२) "न धिष्ण्यमासादयेदि"ति श्रुतेः । "अनिरुक्तं गेयम्" इति ब्राह्मणेन गायत्रस्य सामान्येनानिरुक्तगानविधानात्तन्निवृत्त्यर्थंन्निरुक्तमित्युक्तम् ।

यज्ञायज्ञीयं गायेदिति। अत्र प्राङ्मुखता सिद्धा। "प्राङ्मुखकरणञ्चाना-देशे" (१।२।१६) इति। चेत् यदि क्रतोः कृत्स्नः सम्वत्सरोदीक्षः दीक्षाकालः स्यात् सौत्यः सुत्याकालोवा भवति। यथा गवामयनं तापश्चितादेरिति ॥ १४ ॥

"ऋतुष्ठायज्ञायज्ञीयम"न्यत्र ॥ १५ ॥

पुच्छे इत्यनुवर्त्तते सम्वत्सरदीक्षा सुत्या गवामयनादेरन्यत्र ज्योतिष्टो-मादौ"ऋतुष्ठा (१) यज्ञायज्ञीयं"पुच्छे गायेत् ॥ १५ ॥

वामदेव्यं दक्षिणेऽपिकक्षे तिष्ठन् गायेत् प्रजापतिहृदयमुत्तरे ॥ १६ ॥

प्रजापते र्हृदयमुत्तरेऽपिकक्षे तिष्ठन् गायेत् ॥ १६ ॥

एतानि गौतम उत्तरेणाग्निं गत्वा ॥ १७ ॥

एतानि यथाविहितानि सामानि उत्तरेणाग्निं गत्वा प्रारभेतेति गौतम-आचार्यो मन्यते। दक्षिणेनाग्निं गत्वेति स्वमतं पूर्वमुक्तमिति ॥ १७ ॥

अथ मतान्तरमाह—

एतान्येव प्रदक्षिणं प्रत्यन्ताद्धानञ्प्यो (त्यो) यज्ञायज्ञीयं पुच्छे प्रजापतिहृदयस्थाने च वामदेव्यम् ॥ १८ ॥

एतान्येव गायत्रादीनि शिरःप्रभृति प्रत्यन्तात्-यावदुत्तरं पक्षं प्रदक्षिणं गायेत्। न पुनः पुनः प्रत्याव्रज्य गायेत्। अयन्तु विशेषः यज्ञायज्ञीय पुच्छे प्रजापतिहृदयस्थाने च वामदेव्यमिति ॥ १८ ॥

दक्षिणेनाग्निं गत्वा गौतमीये व्यत्ययं ये पक्षयोः शाण्डिल्यः ॥ १९ ॥

शाण्डिल्यस्तु गौतममत एव स्थित्वा ये पक्षयोः सामनी तयोर्व्यत्यय-माह। गमनञ्च दक्षिणेनाग्निमित्याह। अन्योऽन्यस्थानापत्तिर्व्यत्ययः ॥१९॥

शिरसि च गीत्वोत्तरे पक्षे ॥ २० ॥

एतदपि शाण्डिल्योमन्यते शिरसि गीत्वा तदनन्तरमेवोत्तरे पक्षे रथन्तर गायेदिति ॥ २० ॥

यथागीतमितराणि ॥ २१ ॥

इतराणि बृहत्प्रभृतीनि सामानि गौतममते यथागीतं तथा गायेत् ॥२१॥

उत्तरे चोपप्लवे (पे) स्वअंहृदयमालभ्य प्रजापतिहृदयमध्व-र्युपथे स्यैतम् ॥ २२ ॥

---

(१) एवमादिः सामविशेषस्य संज्ञा स च (सामविशेषः) मन्त्रब्राह्मणे द्रष्टव्य इति साकल्येनात्र नदर्शितः।

स्वमात्मीयहृदयदेशमालभ्योपप्लवे (ये) प्रत्यङ्मुखस्तिष्ठन् प्रजापतेर्हृदयं गायेत् । चकारात्स्वस्थानेऽपि उत्तरे अपिकक्षे गायेत् । एतदन्तं शाण्डिल्यमतमिति । अथसर्वमतसाधारणमाह अध्वर्युपथे श्यैतमिति । आक्रमणेष्टकासमीपमध्वर्युपथः । येन पथाऽध्वर्युरग्निमारोहति । तस्मिन् (तत्र स्थित्वा सर्वान्ते) श्यैतं साम गायेदिति ॥ २२ ॥

इति प्रथमस्य पञ्चमी कण्डिका ॥ १ ॥ ५ ॥

## अथ षष्ठी कण्डिका—

प्रवर्ग्यवत्युत्तरेण सम्राडासन्दीं गत्वा पश्चात्तिष्ठन्नध्वर्युप्रेषित-"स्त्यग्नायिरि"ति गायेत्पदाय पदाय स्तोभेत् ॥ १ ॥

आग्निकं साम गानमुक्तं "पुष्करपलाश उपधीयमान" इत्यादि—"अध्वर्युपथेश्यैतमि"-त्यतेन । इदानीं प्रवर्ग्यकर्मोच्यते-प्रवर्ग्यवतीति । प्रवर्ग्योऽस्मिन्नस्तीति प्रवर्ग्यवत्तस्मिन् कर्मणि (क्रतौ) प्रवर्ग्योद्वासन(१)काले । सम्राड् घर्मः स यस्यां निधीयते आसन्द्यां (वेत्रासने) सा सम्राडासन्दी ताम् तस्या उत्तरेण गत्वा पश्चात्-पश्चिमे प्रदेशे तिष्ठन् अध्वर्युणा(२) सम्बोधितः सन् "स्त्यग्नायिरि" त्येतत्साम गायेत् । अथ च-पदाय पदाय स्तोभेत् । अनुपदं स्तोभमनु(३)संहरेत् ॥ वीप्सायान्द्वि-

(१) प्रवर्ग्योमहावीरः । स एव घर्मोऽप्युच्यते । सम्राडिति च । नन्वासन्नतमाग्नि ताक्ष्यसामादीन्यनादिश्य क्रमभेदेन प्रवर्ग्यसाम्नामादेशः किमिति कृत इति चेन्न तानि (ताक्ष्यसमादीनि) हि कामतः प्रयुज्यन्ते । अवश्यम्भावीनि त्वेतानीति । नन्वेवमपि प्रवर्ग्यसामान्यनुक्त्वैव तदुद्वासनसाम्नां प्रथमं विधानमक्रममिति चेच्छृणु । प्रवर्ग्यसाम्नामनित्यताज्ञापनार्थन्तथा विधानम् । तथाच वक्ष्यति "न वाकुर्यादि"ति (१-६-१७)। अत्र धन्वी-प्रवर्ग्यवतीति विशेषणं प्रथमयज्ञे प्रवर्ग्यनिषेधात् प्रवर्ग्योद्वासनविषयमेतद्विधानामिति वक्ष्यमाणसूत्रपर्यालोचनयाऽवगन्तव्यम् । नन्वेव प्रवर्ग्यवतीति व्यर्थविशेषणम् सत्यम् विस्पष्टार्थम् । केचित्तु "प्रवर्ग्योद्वासन उत्तरेण" इत्येव पठन्ति । अत्र प्रवर्ग्योद्वासने "प्रस्तोतः साम गाय" इति त्रिः प्रैषोभवति । प्रतिप्रैषं सकृत्सकृत्सामगानं त्रिर्वचनस्य समुदायसिद्धत्वादित्येके । प्रतिप्रेषं त्रिर्गानमित्यन्ये ॥

(२) प्रेषणं नाम संस्कारार्थं सम्बोधनमित्यग्निस्वामिनः ।

(३) "अग्निं होतारं मन्ये दास्वन्तम्" इत्यस्यामृचि प्रतिपदं "स्त्यग्नायिरि"ति स्तोभमाहरेदित्यर्थः ॥

भावः ॥ अथेदं किमर्थमारभ्यते ? यथासिद्धमेतत्स्वाध्यायवदिति चेदत्रो-च्यते—आधिकारिकमिदं सूत्रं प्रकरणादौ प्रकारप्रदर्शनार्थोविधिरिति ॥१॥

निधनायैव स्तौभीं वाचं विसृजेत् ॥ २ ॥

इह पूर्वस्तोभः अनुपायः । उत्तरः सोपायः । तत्र किं पूर्वस्यानुपसंहार उतोत्तरस्येति संशये आचार्य आह—निधनायैवेति । स्तौभीं "त्यग्नायिरि" ति स्तोभान्तगतां वाच निधनायैव विसृजेत् ब्रूयात्, अर्थात्सोपायस्तोभः कार्यः न प्रतिपादमित्यर्थः ॥ निधनन्नाम "पञ्चभिः सप्तभिर्वाभागैरुपेतस्य साम्नोऽन्तिमोभागः ॥ २ ॥

उपग्रहप्रभृतीनि स्वरयन्त उपेयुर्ये घर्म उपयुक्ताः स्युः ॥ ३ ॥

ये ऋत्विजः घर्म्मे प्रवर्ग्यप्रचारे उपयुक्ताः स्युस्ते अन्ये च उपग्रहप्रभृतीनि उपग्रहादीनि स्वरयन्त उपेयुः । स्वरेण सह ब्रूयुः । उपग्रहशब्देन निधनात्पूर्वपठित एकार उच्यते । उपसमीपे गृह्यते पठ्यते इत्युपग्रह इति स्वरयन्त इति वचनं प्रथमद्वितीयार्थं तृतीयस्याध्ययनसिद्धत्वात्।३।

पत्नी च ॥ ४ ॥

"उपग्रहप्रभृतीनि निधनान्युपेयादिति" शेषः । पत्न्याअपि प्रवर्ग्यस मन्वयादेवसिद्धे पुनर्वचनं यजमानस्य निधनवचनादेव तस्याः कृतकार्यत्वाशङ्कानिवृत्त्यर्थमिति ॥ ३ ॥

एवं मध्ये ॥ ५ ॥

योऽयं विधिरुक्तः स एवमेव मध्ये कार्यः । अयम्भावः । मार्गस्य मध्येऽपि एवमेव प्रस्तोता गायेत् । सर्वे च निधिनं ब्रयुरिति ॥ ५ ॥

प्राऽप्यचाहवनीयायतनम् ॥ ६ ॥

आहवनीयायतनमुत्तरवेदिं प्राप्य चैवमेव साम गायेत् । निधनं च सर्वे ब्रूयुः । अत्र धन्वी—"आहवनीयायतनमिति घर्मोद्वासनदेशोपलक्षणम् । तेन नदीद्वीपादौ घर्मोद्वासनेऽप्येवं कुर्युरिति ॥ ६ ॥

परिषिच्यमानेऽप उपस्पृश्य वार्षाहरम् ॥ ७ ॥

परिषिच्यमाने घर्मे अप उपस्पृश्य ( आचम्य ) वार्षा(१)हरम् वृषाहरिशब्दघटितं साम गायेत् । अध्वर्युणा प्रेषितः प्रस्तोतेत्यर्थः ॥ ७ ॥

इष्टाहोत्रीयं परिषिक्ते ॥ ८ ॥

परिषिक्ते घर्मे इष्टाहोत्रीयं साम गायेत् ॥ ८ ॥

---

( १ ) "अचिक्रदद्वृषाहरि"रित्यादिकं वृषाहरिशब्दघटितम् ।

तस्य सर्वे निधनमुपेयुः ॥ ९ ॥

तस्य इडाहोत्रीयस्य साम्नोनिधनं घर्मोपयुक्ताः सर्वे ऋत्विज उपेयुः ब्रूयुः ॥ ९ ॥

द्वीपश्चेद्घर्मपात्राणि हरेयुर्नाकाङ्क्षेत् परिषेचनम् ॥ १० ॥

द्वीपं द्विर्गता आपोयस्मिंस्तद्द्वीपं नद्यादेर्मध्य उन्नतः प्रदेशस्तं (तस्मिन्) चेद् घर्मपात्राणि अध्वर्य्यवोहरेयुः प्रापयेयुस्तदानीं तंद्वीपं प्राप्य परिषेचनसमनन्तरकालीयानि "त्यग्नायिरि" त्यादीनि त्रीण्यपि(१) सामानि गायेदेव। न तत्र पात्रेषु परिषेचनमाध्वर्य्यवमाकाङ्क्षेत् प्रतीक्षेत्। अत्राग्निस्वामिनः "कःपुनरस्यकर्मणोविषयः? यदा माध्यन्दिने घर्मक्रिया साऽस्य विषयः" इति ॥ १० ॥

श्यैतं प्रत्याव्रजᳪस्तृचे वैकस्यां वा ॥ ११ ॥

इडाहोत्रीयगाने कृते आहवनीयायतनाद्द्वीपाद्वा प्राग्वंशं हविर्गृहा(२) त्प्राग्गृहम् प्रत्याव्रजन् प्रस्तोता श्यैत साम गायेत्। एकस्यामृचि तृचे (३) वा श्यैतस्य (वाशब्दद्वयन्तुल्यवद्विकल्पार्थम्) ॥ ११ ॥

यजमानोनिधनमनूपेयात् ॥ १२ ॥

गीयमानस्य प्रस्तोत्रोच्यमानं निधनं यजमानोऽप्यनुब्रूयात्। यत्र हि श्रूयते "प्रत्याव्रजन् श्यैतं यजमानोनिधनम्" इति। अत्रापीत्यर्थवशा· दुन्नेयः ॥ १२ ॥

पूर्वया द्वारा प्रपद्योत्तरेणाग्नीन्गत्वा पश्चाद्गार्हपत्यस्य तिष्ठन् महावीरायतनं प्रेक्षमाणोवामदेव्यं गायेदिति धानञ्जप्यः (य्यः) १३॥

पूर्वया द्वारा(४) पत्नीशालां प्रपद्य प्रविश्य अग्नीन् पत्नीशालाग्नीन्(५) (तेषाम्) उत्तरेण गत्वा गार्हपत्यस्याग्ने· पश्चात्–पश्चिमे प्रदेशे तिष्ठन् पूर्वं प्रवर्ग्यप्रचारे यन्महावीरायतन (यस्मिन्देशे रोचते घर्मस्तदायतनं) तत्प्रेक्षमाणोवामदेव्यं साम गायेदिति धानञ्जप्य (य्य) आचार्य आह॥१३॥

---

(१) अत्र हरेयुरित्यस्यानन्तर "सन्ततान्येव गायेत्" इति द्राह्यायणीयेऽधिकं मन्यते। सन्ततान्यावच्छेदेनैवेति तद्व्याख्यानं धन्विकृतं द्रष्टव्यम् ॥

(२) तथाचामरः "प्राग्वंशः प्राग्घविर्गेहात्" इति ॥

(३) अत्राग्निस्वामिनः "तृचापत्तीनि तृचेष्वि"ति (१।५।२) तृचेन क्रियायां प्राप्तायां श्यैतस्यैकस्यांवेति विकल्पयति इत्येवमाहुः।

(४) "स्त्री द्वार्द्वारम्प्रतीहार" इत्यमरः ॥

(५) अत्र एनब्योगे षष्ठ्यर्थे (पा० २।३।३१) द्वितीया ॥

श्यैतान्तानीति शाण्डिल्यः ॥ १४ ॥

स्यग्नायिप्रभृतीनि श्यैतान्तानि चत्वार्येव सामानि घर्मोद्वासने गायेत्। न वामदेव्यमावश्यकमिति शाण्डिल्य आचार्य आह। तथाच जैमिनिः श्यैतान्तान्येवोक्त्वा वामदेव्यं नोक्तवान्। "अत्र कश्चिद्वामदेव्यं नित्य(१)मिति मत्वा व्याचष्टे श्यैतान्तान्येव तिष्ठन् गायेत्। वामदेव्यन्त्वासीन एवेति। तत्सूत्रानुगुणं न भवतीति" धन्वी ॥ १४ ॥

गणः सामान्युत्तराणि ॥ १५ ॥

अत ऊर्ध्वं यान्यादेक्ष्यामस्ताक्ष्यसामादीन्युद्वंशीयान्तानि दीक्षणीयादिषूदवसनीयान्तेषु कर्मसु तानि सर्वाणिउत्तराणिसामानि एकोगणः। सङ्घः। तस्य सह प्र(२)वृत्तिः सह वा निवृत्तिरित्यर्थः। अत्र धन्वी। तेषां स्वे स्वे विषये विकल्पं वक्ष्यति। तत्र यदेकं कर्त्तुमिष्यते तदाऽन्यदपि कर्त्तव्यं न पुनरेकस्य करणमन्यस्याकरणमिति वैषम्यंकार्यमित्यनेन सूत्रेणोक्तमिति ॥ १५ ॥

आभिरूप्यात्कर्त्तव्यानीत्येके ॥ १६ ॥

तेषां साम्नां तत्र तत्र कर्मणि आभिरूप्यात्—आभिरूप्यं नाम लिङ्गं क्रियमाणकर्माभिवादित्व, तस्मात्कर्त्तव्यानीत्येवमेके आ(३)चार्या ब्रुवते। तथाच जैमिनिः "सर्वेष्विष्टिपशुसोमेषु यथालिङ्गं यथादैवतं च सामानि गायेत्" इति ॥ १६ ॥

न वा कुर्यात् ॥ १७ ॥

न वा कुर्यादश्रुतत्वात्। न हि वचनाभावे लिङ्गमात्राद्गानं युक्तमिति भावः। अपरेब्रुवते-अग्नीषोमीयसवनीययोरपि पशुबन्धयोराभिरूप्यात्सामगानप्रसङ्गः। इष्टिषु च सामिधेन्यनुवचनोयादिषु। तस्मान्न कुर्यादिति ॥ १७ ॥

स्वे वा यज्ञे कुर्यादित्येके ॥ १८ ॥

---

(१) अत्राग्निस्वामिनः "शान्त्यर्थं हि कर्मणोऽनुचर वामदेव्यन्तस्यागानमयुक्त, तच्चेद "वामदेव्यं गार्हपत्यस्य पश्चादि"ति। पश्चाच्चासीन एवेति श्रूयते "उदङ्ङासीन उद्गायति, प्रत्यङ्ङासीनः प्रस्तौति, दक्षिणाऽऽसीनः प्रतिहरती"ति "त्रयाणामेतत्स्थानविशेषे कर्म ॥

(२) तथाच पाणिनीयैरपिभाष्यते "सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्ति"रिति ॥

(३) अत्र श्रुतिर्नास्तीत्यग्निस्वामिनः। तथा चोत्तरं सूत्रमप्यनुवदति ॥

स्वे स्वकीये यज्ञे-सत्रेषु अवश्यं कुर्यादित्येके आहुः। भिन्नेषु हि आचार्यमतेषु "अलोपोलोपान्न्यायतरः" इति न्यायात्। यदप्युक्तम्, आभिरूप्यप्रसङ्गात् सोमाङ्गभूतेषु हविर्यज्ञेषु सामगानप्रसङ्ग इति। तन्नोपपद्यते-वक्ष्यति हि "यावद्वचनं कर्मयोग" इति ॥ १८ ॥

दीक्षणीयायां तार्क्ष्यसामनी गायेत् "त्यमूषु" इत्येते ॥ १९ ॥

दीक्षणीयायामिष्टौ प्रधानयागकाले एते-आइते आगते आसन्ने हविषि "त्यमूषु" इति एवमादिके तार्क्ष्यसामनी गायेत्। अङ्गानां प्रधानयागकालत्वात्। स्पष्टमत्राह जैमिनिः "यानि पशौ शिष्टानि सामानि वपान्ते तानि गायेत् प्रधानकाल उपसत्सु चेष्टिषु चे" ति। तथा "प्रागावृत्तस्तिष्ठन्नुपविष्टोवा मध्यमया वाचा गायेदिति। तार्क्ष्यः सुपर्ण इतिपर्यायशब्दात्सौपर्णान्यपि गृह्येरन्निति ऋक्प्रतीकाधारणमत्रेति बोध्यम्॥१९॥

प्रायणीयायांप्रवद्भार्गवम् ॥ २० ॥

प्रायणीयायामिष्टौ प्रवद्भार्गवं साम "गाये"दिति वाक्यशेषः॥२०॥

उदयनीयायामुद्वत् ॥ २१ ॥

उदयनीयामिष्टौ उद्वद्भार्गवं गायेत्। प्रकृतस्य भार्गवशब्दस्यानुकर्षणार्थः। उदयनीयायामक्रमेसोमोपदेशोलाघवार्थः॥ २१ ॥

आतिथ्यायां गायत्रीसामौशनम्॥ २२ ॥

आतिथ्यायामिष्टौ गायत्रीसाम गायत्र्यामृचि गीयमानम् औशनं साम गायेत्। त्रैष्टुभान्यौशनानि सन्ति अतोविशेषणार्थङ्गायत्रीसामेति२२

( अथप्रवर्ग्यकर्म )

अञ्जन्ति घर्मन्तत्र शार्ङ्गम् ॥ २३ ॥

प्रवर्ग्यप्रचारे घर्मं महावीरमध्वर्यवोऽञ्जन्ति तदा शार्ङ्गं साम(१)त्रिर्गायेत्। अत्रजैमिनिः प्रवर्ग्यसामान्यधिकृत्याह "अन्तरेण चेत्वुत्करौ प्रपद्यापरेण होतारं परीत्य दक्षिणतोघर्ममभिमुख उपविश्य गायेदिति॥२३॥

राजतजातरूपे उपदधति तच्छुक्रचन्द्रे ॥ २४ ॥

राजतसौवर्णयोः शतमानयोरुपधानं कुर्वन्त्यध्वर्यवः यस्मिन्काले तत् तदानीम्। अव्ययमेतत्। शुक्रचन्द्रे गायेत्। राजतेशुक्रम् सौवर्णेचन्द्रम्। तच्छब्देनानयोर्नानाकालत्वमपि ज्ञापयति॥ २४ ॥

अभीन्धते त-"द्ध्यमस्य तन्वौ" ॥ २५ ॥

---

( १ ) अञ्जन्तीत्यत्र हि बहुवचनं कालार्थम्। अत्र "शेषाणि यानि वक्ष्यते तानि सर्वाणि सकृत्सकृद्गायेत्। आरूढवदाङ्गिरसञ्च त्रिर्गायेदित्यग्निस्वामिभाष्यम् ॥

घर्ममित्यनुवर्त्तते। रोचनार्थं घर्मम् अभीन्धते अध्वर्यवः तत्-तदानीं "घर्मस्य तन्वौ" गायेत् ॥ २५ ॥

रुचितं प्राहुस्तद्घर्मस्य वा रोचनमिन्द्रस्य वा ॥ २६ ॥

घर्ममित्यनुवर्त्तते। यदा रुचितं घर्मं प्राहुरध्वर्यवः "रुचितोघर्म"इति तत्-तदानीं घर्मरोचनमिन्द्ररोचनं वा साम गायेत् ॥ २७ ॥

धेनू उपसृजन्ति तद्धेनु ॥ २७ ॥

गौरजा च धेनू। यदा ते उपसृजन्ति वत्स वर्कराभ्यां मिश्रयन्ति तत् तदानीं धेनुसाम गायेत्। सकृदेव न प्रतिद्रव्यम् ॥२७॥

तस्य देवतायै सोपायं स्तोभमाहरेन्न पादायेति गौतमः ॥ २८ ॥

तस्य साम्नः देवतायै देवतार्थं सोपायं स्तोभमाहरेत्-कुर्यात्। न पादार्थमुपायमेवेत्येवमाह गौतमः ॥ २८ ॥

उत्तमपादं पुनरभ्यस्येद्यथा पञ्चनिधने वामदेव्ये ॥ २९ ॥

उत्तम मग्रेतनं धेनोरुभयं पादं पुनरभ्यस्येत्। कथम्? यथा पञ्चनिधने वामदेव्ये। "कयानश्चित्र आभुवत्" इत्यत्र निधनभूतासु देवतासु प्रत्येकं स्तोभ आम्नातः प्रतिपादं निरुपायः स्तोभः। उत्तमश्च पादश्चतुर्थनिधनानन्तरमभ्यस्येत्त(१)द्वदिति ॥ २९ ॥

पय आहरन्ति तत्पयः ॥ ३० ॥

यदा धेनू दुग्ध्वा पय आहरन्ति अध्वर्यवः। तत्-तदा पयः संज्ञकं साम गायेत् सकृदेव तद्ग्रहणसामर्थ्यात् ॥ ३० ॥

आसिञ्चन्ति तत्सिन्धुसाम(२)"आ त्वा विशन्त्वि"ति ॥३१॥

यदा तप्ते घर्मे (महावीरे) पय आसिञ्चन्त्यध्वर्यवस्तत्-तदानीम् ॥ "आ त्वा विशन्तु" इति सिन्धुसाम गायेत् ॥ ३१ ॥

शफाभ्यां प्रतिगृह्णन्ति तद् "वशिष्ठस्य शफौ" ॥३२॥

यदा शफा(३)भ्यां खुराभ्यां महावीरं प्रतिगृह्णन्ति अध्वर्यवः। तत् तदानीं "वशिष्ठस्य शफौ" गायेत ॥ ३२ ॥

---

(१) अत्र धन्वी प्राह "अत्र तथाध्ययनाभावेऽपि पञ्चनिधनवामदेव्याध्ययनं निदर्शनार्थमिति गौतमाभिप्रायः। अत्रोपायशब्देन स्तोभान्तरगतोवाशब्दोऽभिधीयते। तस्य सर्वेषु सामसु निधनोपायत्वात् निधनलक्षणत्वादित्यर्थ" इति ॥

(२) अत्र व्याख्यायाञ्च सिन्धुषाम इति द्राह्यायणीयस्य पाठः "तत्र पूर्वपदात्" (पा० ८।३।१०६) इति षत्वम् ॥

(३) यज्ञियकाष्ठनिर्मितं महावीरधारणार्थं मध्यभागे वर्त्तुले द्वे शफपदवाच्ये भवतः॥

ह्रियमाणे "व्रतपक्षौ" ॥ ३३ ॥

ह्वामार्थं घर्मे ( महावीरे ) ह्रियमाणेऽध्वर्युभिः "व्रतपक्षौ" गायेत् ॥ अत्र स्वामिनः "अत्र तद्ग्रहणं न करोति अविप्रतिपत्तिः सर्वेषामध्वर्यूणा·मेतस्मिन्नानुपूर्व्ये "इति" ॥३३॥

हुते"ऽश्विनोर्व्रते "अहोरात्रयो"र्वा ॥ ३४ ॥

हुते घर्मे ( महावीरे ) "अश्विनोर्व्रते" "अहोरात्रयोर्व्रते वा (१) गायेत् ॥ ३४ ॥

रौहिणाभ्यां पुरोडाशाभ्यां चरन्ति तद्राजन–रौहिणके ॥ ३५ ॥

रौहिणसंज्ञौ पुरोडाशावेककपालौ तयोर्हूयमानयोः राजन–रौहिणके सामनी गायेत् । एकत्र राजन–मपरत्र रौहिणं यथाकालम् ॥३५॥

परिघर्म्यँ सम्राडासन्द्यां समारोपयन्ति तदाऽऽरूढवदा·ङ्गिरस–"मित एत" इति स्वर्णिधनम् ॥ ३६ ॥

परि घर्म्यं महावीर–धवित्र–शफादि–द्रव्यं घर्मोपकरणं घर्म्यं तादर्थ्ये "पादार्घाभ्याञ्च" (पा०५।४।२५) इतियत्प्रत्ययः । चादन्यतोऽपि क्वचित् । वीप्सा (२)यामत्र परिः कर्मप्रवचनीयः ( पा०१।४। ९० ) तद्योगे द्वितीया (पा०२।३।८) सर्वं तत् सम्राडासन्द्यां घर्मासनेऽध्वर्यवः समारोपयन्ति–सादयन्ति । तत्–तदानीम् आरूढवदाङ्गिरसम "इतएते" इति गायेत् । अस्य साम्न "आ रोहा (रुहन्)" इति पदान्वयादारूढवदाङ्गिरसमिति समाख्या । अस्य च साम्न उपेति निधनं तदपोह्य तत्स्थाने स्वरिति निधनं च कुर्यात् । स्वर्णिधनमितिहि बहुव्रीहिः ॥ "पूर्वपदादि" ( पा० ८।४।३ ) ति णत्वम् ॥ ३६ ॥

अथ्या विद्यया संस्कृतोऽभिष्टुतोऽनुशस्तश्च घर्मो भवतीत्यतआह—

ऋङ्मयोयजुर्मयः साममयोभवतीति ह्याह ॥ ३७ ॥

इति–एवं ब्राह्मण आह ॥ हीति यथा श्रुतनिर्देशार्थम् ॥ ३७ ॥

अग्निं प्रणयन्ति, तत्राग्नेर्व्रतम् ॥ ३८ ॥

औपवसथ्येऽहनि उत्तरवेद्या(३)मग्निं प्रणयन्ति ( स्थापयन्ति ) अ·

---

( १ ) अपरे पुनर्विनिवेशं वर्णयन्ति अतिरात्रे अहोरात्रयोर्व्रते, अन्यत्राऽश्विनोर्व्रते ॥

( २ ) वीप्सा नाम व्याप्तुमिच्छा । साकल्येन क्रियासम्बन्धः । तत्र ॥

( ३ ) तत्राहवनीयवच्छम्या–जानु–प्रादेशानामन्यतममात्रोच्छ्रायां समचतुरस्रां वेदिं कुर्वन्ति सोत्तरवेदिस्तस्याः । "शम्या तु युगकीलकम्" इत्यमरः ॥

ध्वर्योवस्तत्र "अग्ने व्रतमिति" साम गायेत्। तत्र शब्दादत्र केचिदनुव्रजनमिच्छन्ति ॥ तथा च द्राह्यायणीयभाष्ये धन्वी–तदानीमग्ने व्रतमनुव्रजन्नेव गायेत् होतुरनुव्रजनदर्शनादिति ॥ ३८ ॥

अग्नीषोमौ तत्रोभयोर्व्रते ॥ ३९ ॥

अग्निश्च सोमश्च अग्नीषोमौ "अग्नेस्तुत्स्तोमसोमाः" (पा०८।३।८२) इति सत्त्वषत्वम्। प्रणयन्तीत्यनुवर्त्तते। अध्वर्यवः। तत्र तयोः प्रणीयमानयोरुभयोर्व्रते तन्नामके अग्निव्रत–सोमव्रते सामनी गायेदनुलिङ्गम्। अग्नेः सोमस्य चेत्यर्थः ॥ ३९ ॥

सुत्यायां "यज्ञसारथ्य"–हरहः ॥ ४० ॥

सुत्यायां सुत्यादिवसे "यज्ञसारथि" इति साम गायेत् ॥ एवमहरहरहीनेषु। कः पुनरस्य यज्ञसारथिनोदेशः कालश्चेति ? अत्र द्राह्यायणीये "प्राक्प्रातरनुवाकोपाकरणादाग्नीध्रीये" इति पठ्यते। प्रातरनुवाकोपाकरणात् प्राक्–पूर्वमग्नीध्रमण्डपे उपविश्येति तदर्थः। अत्र स्वामिनः "सुत्यार्थमाज्येषु प्रणीयमानेषु प्रणयनाधिकारसामर्थ्यात् प्रणयन्तीति प्रकृतं तस्य पश्चात्तिष्ठन्गायेदित्यर्थं" इत्याहुः ॥ ४० ॥

सत्रे "सत्रस्यर्द्धि" ॥ ४१ ॥

सत्रेषु(१)यज्ञसारथिस्थाने "सत्रस्यर्द्धि" इति साम गायेत् ॥४१॥

उक्षा चेदनूबन्ध्य "औक्ष्णोरन्ध्रे"॥४२॥

अवभृथोत्तरकालं पशुरनुबन्ध्योऽस्ति स चेदुक्षा स्यात् तदानीम् "औक्ष्णोरन्ध्रे" सामनी ? वपान्ते गायेत्। "यानि पशौ शिष्टानि तानि वपान्ते गायेत्" इतिजैमिनिवचनात्। अत्र केचिदाग्नीध्रे गानङ्कार्यमित्याहुः। अन्येतु विशेषवचनादङ्गानां प्रधानदेशत्वादाहवनीयसमीपे गानमित्याहुः। उक्षा गर्भसेचनसमर्थोऽच्छिन्नमुष्कोगौः ॥ ४२॥

ऋषभ "आर्षभम्" ॥ ४३ ॥

अनूबन्ध्य इति सप्तम्या विपरणतमनुवर्त्तते। ऋषभे अनूबन्ध्ये सति "आर्षभम्" साम गायेत्। ऋषभ अनड्वान्भूत्वा पुनर्वृषभत्वमापन्नःच्छिन्नमुष्कोगौः ॥ ४३ ॥

उन्नते "त्रैककुभम्" ॥ ४४ ॥

---

(१) "सूत्रे लिङ्गवचनमतन्त्रम्" (७४) इति परिभाषितत्त्वापाणिनीयैः ॥ जातिनिर्द्देशोवा ॥

ऋषभ इत्यनुवर्त्तते । उन्नते–उन्नतपृष्ठे महाक(१)कुभि ऋषभे अनूबन्ध्ये "त्रैककुभं" साम गायेत् ॥ ४४ ॥

वशायां "वाशम्" ॥४५॥

वशा बन्ध्या "वशा बन्ध्याऽसुता योषा स्त्रीगवी करिणीषु च" इति मेदिनी । तस्यामनू बन्ध्यायां "कईं वेदा" इति मन्द्रादिकम् वाशं साम गायेत् ॥ ४५ ॥

अज "आजिगम्" ॥४६॥

अजे अनूबन्ध्ये "आजिगं" साम गायेत् ॥ ४६ ॥

मेष "औणार्यवम्" ॥ ४७ ॥

मेषेऽनूबन्ध्ये "औणार्यवम्" साम गायेत । उर्णायुर्मेषः "मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके" इत्यमरः ॥ ४७ ॥

पयस्यायां "स्वरं" पयोनिधनम् ॥४८॥

यद्यनूबन्ध्या स्थाने पयस्यामामिक्षां कुर्युः । सा हि श्रृतोष्णे पयसि दधियोगात्समुत्पद्यतेऽतो विकारार्थे "गोपयसोर्यत्" ( पा०४।३।१६० ) इति यत । "आमिक्षा सा श्रृतोष्णे या क्षीरे स्याद्दधियोगतः" इत्यमरः । "पयस्यन्तु पयोजातहितयोर्वाच्यलिङ्गवत्" इति च मेदिनी । तस्यां क्रियमाणायां पयोनिधनं 'स्वरं" स्वरसंज्ञं साम गायेत् ॥ ४८ ॥

उदवसानीयाया–"मुद्वंशीयम्" ॥ ४९ ॥

उदवसानीयायामिष्टौ "उद्वंशीयं" साम गायेत् ॥ ४९ ॥

उपक्रम्य समापयेदाक्रतोरपवर्गात् ॥ ५० ॥

उपक्रम्य यदि दीक्षणीयायां तार्क्ष्यसामोपक्रान्तं स्यात् तदा आक्रतोरपवर्गात् तत्प्रभृतीन्युद्वंशीयान्तानि सर्वाणि सामानि समापयेत् । किञ्चित्कृत्वा किञ्चिन्नत्यजेदित्यर्थः । "गणः सामान्युत्तराणी" ( १।६।१५ ) ति यत्पूर्वमुक्तं तस्यैतन्निगमनं विस्पष्टार्थम् ॥ ५० ॥

इति प्रथमस्य षष्ठी कण्डिका ॥१॥६॥

---

( १ ) ककुभ्शब्देन शोभा प्रोच्यते । सा हि वृषभस्य ककुभ् शस्यते । "ककुभ् स्त्रियांप्रवर्गी दिक् शोभासु चम्पकस्रजी" तिमेदिनी ॥

## अथ सप्तमी काण्डिका—

**औदुम्बरीमुच्छ्रयिष्यन्पूर्वेण देवयजनं गच्छेद्दक्षिणतश्चेद्‌स्यावसथः स्यात् ॥ १ ॥**

प्रस्तोत्रीयमुक्तं परिसामगानं, साम्प्रतमौद्गात्रमुच्यते-औदुम्बरी उदुम्बरस्य विकारःअवयवो वा "अवयवे च प्राण्योषधिवृक्षेभ्यः" (पा० ४।३।१३५ ) इति अण्प्रत्ययेङीप् । सदसोमध्यस्थूणा तामुच्छ्रयिष्यन्नुद्गा-(१)ता देवयजनस्य पूर्वप्रदेशेन गच्छेत् । चेत्-यदि देवयजनस्य दक्षिण तोदक्षिणस्यां दिशि अस्य उद्गातुरावसथोगृहं स्यात् ॥१॥

**उत्तरेण यद्यन्यतः ॥ २ ॥**

यद्यन्यतोऽन्यस्यान्दिश्यावसथः स्यादुद्गातु स्तदा देवयजनस्योत्तरे णोत्तरपार्श्वेन गच्छेत् । उभयथाऽप्नानेन तीर्थेनैव देवयजनस्य प्रवेश इति ॥ २ ॥

**पूर्वौ सदसोद्वार्यौ श्वभ्रावन्तरेण प्रपद्याग्रेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन्नध्वर्युणा महोच्छ्रये—"द्युतानस्त्वे"-ति ॥ ३ ॥**

सदसः पूर्वे द्वारे स्थूणानिखननार्थमवटद्वयमस्ति तौ द्वार्यौ द्वारार्थौ "भवेछन्दसि" ( पा० ४।४।११० ) इति यत् । श्वभ्रौ खातौ तावन्तरेण तयोर्मध्ये प्रपद्य प्रविश्य प्रागग्रामौदुम्बरीमध्वर्युणा पूर्वमेव निहितामग्रेणगत्वोदङ्मुख स्तिष्ठन् अध्वर्युणा सहोच्छ्रयेत् दक्षिणोत्तराभ्यामुत्तानाभ्याञ्च पाणिभ्यां "द्युतानस्त्वा" इति अनेन ब्राह्मणपठितेन मन्त्रेण "पृथिवीमि" त्यन्तेन ॥ तिष्ठन् इत्यूर्ध्वता विधीयते ॥ श्वभ्रावन्तरेणेति "अन्तराऽन्तरेण युक्ते" ( पा० २।३।४ ) इति द्वितीया षष्ठ्यर्थे॥३॥

**"आयो"-रिति श्वभ्रेऽवदध्यात् ॥ ४ ॥**

"आयोष्ट्वा" इत्यादिना "समुद्रस्य हृदये" इत्यन्तेन मन्त्रेण श्वभ्रे तामवदध्यात् स्थापयेत् । अत्र ब्राह्मणम् "तामन्वारभते "आयोष्ट्वे" ति ।" तस्यायमर्थः अन्वारभ्य सादयेदिति । "सादयामि" इति मन्त्रलिङ्गात् सूत्रानुरोधाच्च ॥ ४ ॥

---

( १ ) प्रस्तोतुरधिकारेऽपि "प्रजापतिर्देवेभ्य ऊर्ज्जं व्यभजदि"त्येवमाधिकृत्याह यदुद्गातौदुम्बरीं प्रथमेन कर्मणाऽन्वारभते स्वयैव तद्देवतयाऽऽत्मानमार्त्विज्याय वृणीते तामुच्छ्रयती"ति श्रुतिः । एवं कृत्वा सूत्रकार आह "एकश्रुतिविधानान्मन्त्रान्कर्माणि चोद्गातैव कुर्यादनादेशे" इति ॥ ( १।१।४ )

अवधाय जपेत् "नमः समुद्राय नमः समुद्रस्य चक्षसे" "मा-मा यूनर्वाहासीत्" । "ऊर्गस्यूर्जोदा ऊर्जं मे देह्यूर्जं मेधेह्यन्नं मे देह्यन्नं मे धेहि" इति ॥ ५ ॥

औदुम्बरीं श्वभ्रेऽवधाय एतद्यजुर्जपेत् यथासूत्रितम् । ननु च ब्राह्मणपठित एव मन्त्रः किमर्थं पठ्यते ? उच्यते—ब्राह्मणे मन्त्रैकदेशानां पृथक् विनियोगः प्रतिभाति तन्निवृत्त्यर्थं कात्स्न्येन पठितत्वाज्जपे विनियुक्त इति ॥ ५ ॥

तान्न विसृजेदावच्छादनात् ॥ ६ ॥

तामौदुम्बरीं न विसृजेत् आ अवच्छादनात् । अवच्छादनं छदिषोऽध्यूहनम् । अत्र स्वामी "तामिति निर्देशः औदुम्बर्यां भग्नापहृतोतदग्ध प्ररूढायामन्यामाहृत्य तथैवावृतोच्छ्रयेत् । अत्रापि "तान्न विसृजेदावच्छादनात्" इति ॥ ६ ॥

आध्वर्युणाऽभिहुतायां जुहुयात् तस्यैवावृताऽन्तरेण विशाखे "घृतेन द्यावापृथिवी आप्रीणाथाᳬं स्वाहे" ति पूर्वाम् ॥ ७ ॥

यथाऽध्वर्युणाभिहुतास्यादौदुम्बरी तथाऽभिजुहुयात् । तदाह तस्यैवावृतेति । तस्यैव अध्वर्योरावृता परिपाट्या हिरण्यनिधनादिना । अन्तरेण विशाखे विशाखयोर्मध्ये स्रुवेण, यथासूत्रितेन मन्त्रेणेत्यर्थः । अत्राप्यन्तरेणयोगे षष्ठ्यर्थे द्वितीया ( पा० २।३।४ ) ॥ ७ ॥

"प्रजापतयेस्वाहे"–त्युत्तराम् ॥ ८ ॥

अनेन मन्त्रेणोत्तरामाहुतिञ्जुहुयात् ॥ ८ ॥

अन्यतरां वा स्वाहाकाराद्द्वितीयां यथाभूमिमाज्यं प्राप्स्यतीति ॥९॥

पूर्वयोर्मन्त्रयोरन्यतरेणैकामाहुतिं, केवलं स्वाहाकारेण द्वितीयामाहुतिमिति पक्षान्तरम् । उभयोरपि पक्षयोर्यथाभूमिमौदुम्बरीमूलमाज्यं प्राप्स्यतीति तथाप्रभूतमवस्रावयेत् । इतीत्यनेन प्रकारेणेत्यर्थः ॥ ९ ॥

अधस्ताद्विशाखस्य परिगृह्य जपे–"दिवि देवान् दृᳬंह मयि प्रजामि"ति ॥ १० ॥

विशाखस्याधस्तादुभाभ्यां पाणिभ्यां परिगृह्य गृहीत्वा यथासूत्रितं यजुर्जपेत् ॥ १० ॥

"अन्तरीक्षे वयाᳬंसि दृᳬंह मयि पशून्" इति मध्ये ॥ ११ ॥

मध्ये–औदुम्बरीमध्यं परिगृह्य यथासूत्रितं यजुर्जपेत् ॥ ११ ॥

"पृथिव्यामध्योषधीदृꣳह मयि सजातान्" इति मूले ॥ १२ ॥

मूले- मूलं परिगृह्येत्यर्थः ॥ १२ ॥

ऊर्ध्वं होमाद्याजमानं धानञ्जप्यः ( य्यः ) ॥ १३ ॥

होमादूर्ध्वं यत्कर्म मन्त्रजपात्मकन्तद्याजमान यजमानेनैव कर्त्तव्यम् । इति धानञ्जप्य (य्य) इच्छति, आत्मवाचकत्वान्मन्त्राणाम् । यथा "मयि प्रजां मयि पशून्मयि सजातान्" इति ॥ १३ ॥

स्वयमिति गौतमशाण्डिल्यौ ॥ १४ ॥

स्वयमेवोद्गात्रा मन्त्रजपः कार्य्य इति मतान्तरम् । ऋत्विग्भिः कृतमपि फलाशाशंसनं यजमानगतमेवाशास्यते न स्वार्थमिति । यथा चाम्नायते "यां वै काश्चर्त्विगाशिषमाशास्ते यजमानस्यैव से"ति ॥ १४ ॥

अवच्छाद्यमानायां दिव्यं छद्मासि सन्ततिनाम विश्वजनस्य छाया नमस्तेऽस्तु मा मा हिꣳसीः" इति ॥ १५ ॥

अध्वर्युणाऽवच्छाद्यमानायामौदुम्बर्यामेतद्यजुर्यथासूत्रितं जपेत् ॥१५॥

दक्षिणेन श्वभ्रान्गत्वाऽपरौ द्वार्यावन्तरेण प्रपद्यैतत् कुर्यादिति शाण्डिल्यः ॥ १६ ॥

अग्रेणौदुम्बरीं गत्वे ( १।७।३ )त्यत आरभ्यासमाप्तेरेतत्कर्म । श्वभ्रान् सदोनि(१)मित्तान् स्थूणाश्वभ्रान् । तेषां दक्षिणेन गत्वा अपरावन्त्यौ यौ द्वार्यौ द्वारार्थौ श्वभ्रौ तयोरन्तरेण मध्ये प्रपद्य-प्रविश्य एतदुच्छ्रयणादिकं कुर्यादिति शाण्डिल्यआचार्य्य आह । अत्र द्वितीये यथाक्रमं (पा०२।३।३१) ( पा० २।३।४ ) बोध्ये ॥ १६ ॥

उत्तरेणेति धानञ्जप्यः (य्यः) ॥ १७ ॥

तानेव श्वभ्रानुत्तरेणेति धानञ्जप्य (य्य) आह ॥ १७ ॥

गौतमीयमितरत् ॥ १८ ॥

इतरत्-पूर्वमुक्तं "पूर्वौ सदसोद्वार्यौ" ( १।७।३ ) इत्यादि । तदेतद्गौतमीयं मतम् ॥ अत्र स्वामिनः—किमर्थमेतदुक्तमिति चे-"दुपक्रम्य समापयेदाकर्तोरपवर्गात्" ( १।६।५० ) इत्येतदर्थमिति ॥ १८ ॥

यथेतन्निष्क्रामेत् ॥ १९ ॥

यथेतं यथागतं ( येन प्रकारेणा सदसि प्रविष्टस्तेनैव प्रकारेण ) निष्क्रामेत् निर्गच्छेत् ॥ १९ ॥

इति प्रथमस्य सप्तमी कण्डिका ॥१॥७॥

---

( १ ) सदसि यावन्तः श्वभ्राः ( खाताः ) स्थूणानिखननार्थास्तान्सर्वानित्यर्थः ॥

## अथ अष्टमी कण्डिका—

औदुम्बर्युच्छ्रयणमुक्त्वाऽनन्तरं यूपानुमन्त्रणं विवक्षुराह—

यूपमुच्छ्रीयमाणमनुमन्त्रयेरन् "नृमणऊर्ध्व-
भरसन्त्वे"ति ॥ १ ॥

यूपोच्छ्रयणकालेऽध्वर्युणोच्छ्रीयमाणं यूपमुद्गातरोऽनुमन्त्रयेरन् "युग-पत्कर्मसु सर्वेषु" ( १।९।१ ) इति वक्ष्यमाणसूत्रात्त्रय एवोद्गातारः। चत्वारोऽपीति केचित् । (१)"नृमणे" त्यादि पदत्रयोपादानमुत्तरसूत्रे तत्परामर्शार्थम् ॥ अनुमन्त्रणलक्षणमाह—छन्दोगपरिशिष्टे कात्यायनः "स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि । अनुमन्त्रणीयं सर्वत्र स-र्वदैवानुमन्त्रयेत्" इति ॥ मन्त्रो यथा "ॐनृमण ऊर्ध्वभरसन्त्वोर्द्ध्वभरा द्दशेयम्" इति ॥ १ ॥

एतान्येवोहस्थानानि यावन्तः स्युः ॥ २ ॥

एतान्येव त्रीणि पदानि कदाचिदूहस्थानानि भवन्ति। यत्र यावन्तो यूपाः स्युस्तत्र तावत्सु यूपेषु । तद्यथा—यूपैकादशिन्यां "नृमणस ऊर्ध्व-भरसोवः" इति। तत्र कालभेदेन यूपानामुच्छ्रयणात्प्रकृतिवदविकारेण प्राप्ते वचनमेतत्प्रथमयूपोच्छ्रयणकाल एवोत्तरानभिप्रेत्य मन्त्रोहः कार्य इति। "नृमण" इति समासोऽयं सकारान्तः सम्बुद्ध्यन्तः। यथा "समुद्रे त्वा नृमणा आस्वन्तः" इति। नृषु प्राणिषु मनो यस्य रश्मिभ्याश्ये-तानिति स नृमणाः विष्णुः। विष्णुत्वेनात्र यूपः स्तूयते "उरु विष्णो विक्रमस्व" इत्यादिभिः। तेनायं मन्त्रार्थः हे नृमणः ! त्वामूर्ध्वभरसमू-र्ध्वन्धार्यमाणमहमपि "ऊर्ध्वभरा द्दशेयम्" त्वयाविष्णवात्मनाऽहम-प्यूर्ध्वं धार्यमाणः स्यामिति ॥ २ ॥

यत्र तिष्ठन्त उच्छ्रीयमाणां पश्येयुरिति शाण्डिल्यः ॥ ३ ॥

अन्तर्वेदि वा बहिर्वेदि वा यत्र तिष्ठन्तोयूपं द्रष्टुं शक्नुयुरुद्गातार-स्तत्र स्थित्वाऽनुमन्त्रयेरन्निति शण्डिल्य आचार्योमन्यते। उच्छ्रीयमाण-मिति वर्त्तमानकालनियमात् ॥ ३ ॥

अन्तर्वेद्यवेति धानञ्जप्यो ( य्यो ) "न बहिर्वेदि
यजुरवकल्पत" इति ॥ ४ ॥

अन्तर्वेद्येव तिष्ठन्तोऽनुमन्त्रयेरन्निति धानञ्जप्य ( य्य ) आचार्य्यो

---

(१) अस्मिन्स्थाने युगपत्कर्म्मसु इति सूत्राकरणात्।

आह। "न बहिर्वेदि यजुरवकल्पत" इति श्रुतेः। नावकल्पते न सम्यक्प्रयुक्तं भवतीति तदर्थः। न हि सति सम्भवे बहिर्वेदि मन्त्रप्रयोगोयुक्त इति तदर्थं धन्व्याह ॥ ४ ॥

अथ सुत्येऽहनि प्रातरनुवाकात्पूर्वं विश्वरूपागानमस्मद्ब्राह्मणे विहितं तत्करणे गुणातिशयश्च श्रुतः। शाखान्तरे तु तद्गानं निषिद्धं तन्निषेधपक्षमुपपादयन्ति—

**विश्वरूपाणां गानं यजमानेनोक्तं प्रत्याचक्षीत ॥ ५ ॥**

गुणातिशयलिप्सुना यजमानेन चोदितोऽप्युद्गाता विश्वरूपाणां गानं स कारणं प्रत्याचक्षीत। नैव कुर्यादित्यर्थः। कारणञ्च ग्रहशस्त्रयोरभावः। गानपक्षे ताभ्यामवश्यंभवितव्यम्। तथाच तैत्तिरीयके श्रूयते "ग्रहं वा गृहीत्वा चमसं वोन्नीयस्तोत्रमुपाकुर्यादि"ति ॥ तस्मान्न गास्यामि ग्रहाभावाच्छस्त्राभावात्सम्पदतिरेकदर्शनात् इत्येवं ब्रूयात् ॥ ५ ॥

**"गाये" ति चेदेव ब्रूयान्न मामनामन्त्र्य प्रातरनुवाकमुपाकुर्वा इत्यध्वर्युं ब्रूयात् ॥ ६ ॥**

चेद्यदि यजमानः "गाये"तिपुनर्ब्रूयादेव(१) तदोद्गाताऽध्वर्युं ब्रूयात् मामनामन्त्र्य मामपृष्ट्वा प्रातरनुवाकस्योपाकरणं मा कार्षीरिति ॥ ६ ॥

एवमुक्तोयजमानेनोद्गाता किं कुर्यादित्युच्यते—

**होतारं प्रातरनुवाकायोपविष्टं पूर्वेण गत्वा यजमानश्च। पूर्वया द्वारा प्रपद्यान्तरेण हविर्द्धाने पूर्वेण चक्रे उदङ्मुख उपविशेत्तूष्णीम् ७**

गत्वा हविर्द्धाने, अन्तरेण हविर्द्धानमुद्गात्रा सहैव यजमानः पूर्वया द्वारा हविर्द्धानं प्रविश्य प्रातरनुवाकशंसनार्थम्पूर्वमेवोपविष्टं होतारं पूर्वेणाग्रतो गत्वा हविर्द्धाने, अन्तरेण हविर्द्धानयोः शकटयोरन्तराले पूर्वेणचक्रे चक्रयोः पूर्वे प्रदेशे उदङ्मुखस्तूष्णीमुपविशेदुद्गाता। तूष्णीमिति वचनं स्तोत्रधर्मस्य मन्त्रवदुपवेशनस्य निवृत्त्यर्थम् ॥ ७ ॥

**पुरस्ताद्यजमानः प्रत्यङ्मुखः ॥ ८ ॥**

पुरस्तात्—उद्गातुः पूर्वप्रदेशे यजमानः प्रत्यङ्मुख उपविशेत्तूष्णीम् इत्यनुवर्त्तते ॥ ८ ॥

**"युञ्जेवाचं शतपदीम्, गाये सहस्रवर्त्तनि, गायत्रं त्रैष्टुभं-**

---

(१) एवशब्दोऽवधारणार्थो भिन्नक्रमश्च। यथैव सकारणं प्रत्याख्यातमुद्गात्रा तथैव चेत्सकारणं यजमानो ब्रूयात् "गाये"ति। यथाचोक्तं ग्रहाभावादित्यादि। तत्र यजमानो दर्शयेत् वसतीवर्योग्रहः प्रातरनुवाकः शस्त्रं न च सम्पदतिरेकः यथान्यैः परिसामभिरिति॥

जगत्, विश्वा रूपाणिसम्भृता, देवा ओकांसि चक्रिरे" इत्येतस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानञ्जप्यः (य्यः) स्वाध्यायस्वरेण, मनसैव यजमान उपस्वरेत् ॥ ९ ॥

युञ्जेवाचमित्येतदाद्यायां यथासूत्रितायां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानञ्जप्य (य्य) आचार्य आह अत्र पङ्क्ताविति वचनं पञ्चसु पादेषु व्याप्य गानार्थम् "अनिरुक्तं गेयम्" इति सामान्यश्रुतेरत्रापवादाभावादनिरुक्तमेव गेयम् । स्वाध्यायस्वरेणेति । मध्यमया वाचे(१) त्यर्थः ॥ ९ ॥

त्रिषु त्रिषु पादेषु गायेदिति गौतमः पूर्वम्पूर्वमति सृजन् ॥ १० ॥

युञ्जेवाचमित्येतस्या ऋचस्त्रिषु त्रिषु पादेषु गायत्रङ्गायेत् न पञ्चसु पादेष्विति गौतम आचार्यामन्यते॥ कथमित्यपेक्षायामाह–पूर्वमिति । पूर्वं पूर्वं विसृजन् प्रथमम् आद्येषु त्रिषु पादेषु गीत्वा, पश्चात्प्रथमं पादमुत्सृज्य द्वितीयमुपक्रम्य पादत्रयमनायासेन, पुनर्द्वितीयम्पादमुत्सृज्य तृतीयमुपक्रम्य तथैव गायेदित्यर्थः ॥ १० ॥

प्रगाथकारं वा ॥ ११ ॥

अथवा प्रगाथं कृत्वा गायेत् । तत्कथं ? पादत्रये गीत्वा पश्चात्तृतीयं पादं द्विरभ्यस्य चतुर्थेन पादेन सह गायत्रीं कृत्वा गायेत् । एवञ्चतुर्थं पादं द्विरभ्यस्य पञ्चमेन सह गायत्रीं कृत्वा गायेत् । कुत एतद् ? "पूर्वस्तोत्रीयाऽन्त्यस्य पादस्य पुनरभ्यासः प्रगाथ" इत्युच्यते । अत्र त्रिषु पादेषु गायेदिति वचनात्तस्यैव द्विरभ्यासः कार्य इति ॥ ११ ॥

गीत्वा यथार्थं स्यात् ॥ १२ ॥

एतेषां कल्पानामन्यतमेन गीत्वोद्गाता यथार्थं स्यात् यथाप्रयोजनं गच्छेत् ॥ १२ ॥

विश्वरूपाश्चेद्गायेत् ज्योतीं ँ ष्यपि गायेत् ॥ १३ ॥

"युञ्जेवाचमि"ति तिसृणां स्तोत्रीयाणां विश्वरूपा इत्यभिधानम् । "विश्वा रूपाणि संभृता" इत्यक्षरान्वयात् । चेच्छब्दस्तस्यानित्यतामपि (२)ज्ञापयति । "अग्निर्ज्योतिरि"–त्यादि त्रीणि ज्योतींष्यनुपदं वक्ष्यन्ते ॥ १३ ॥

---

(१) मन्द्रस्वरेणेति स्वामिनः प्राहुः ॥

(२) तथाच वक्ष्यति "नान्यत्र विश्वरूपा ज्योतिष्टोमात्" (१–८–१६) इति ज्योतिष्टोमादन्यत्र विश्वरूपाणां गानं न स्यादिति तदर्थः ॥

परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं, पुरा तस्माद्धो-तारमारमयित्वाऽऽग्रयणस्य वाऽनुहिंकारं पवित्रं धारयन्नास्तावं वा प्राप्य स्तोमयोगात्, "अग्निर्ज्योतिर्ज्योतिरग्निः" "इन्द्रोज्योतिर्ज्योतिरिन्द्रः" "सूर्योज्योतिर्ज्योतिः सूर्यः" इत्येतेषु पादेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत् ॥ १४ ॥

प्रातरनुवाके होत्रा परिहिते—समापिते सति पश्चात्तेनैवानुवक्तव्यमपोनप्त्रीयं(१) नाम सूक्तमस्ति पुरा तदनुवचनात्पूर्वं होतारमारमयित्वा आरमस्वेत्युक्त्वा ज्योतींषि गायेत् । अथवा आग्रयणं गृह्णतोऽध्वर्योर्हिंकारमनु तद्वेलायां दशापवित्रं धारयञ्ज्योतींषि गायेत् । अथवा आस्तावं बहिष्पवमानस्तुतिदेशं प्राप्य स्तोमयोगात् पूर्वं ज्योतींषि गायेत् । अथ गानप्रकारमाह अग्निरित्यादि । अग्निर्ज्योतिरित्येतांस्त्रीन्पादान् प्रत्येकं त्रिरभ्यस्य प्रथमे पादे त्रिरभ्यस्ते मनसा गायत्रमनिरुक्तं गायेत् एवमुत्तरयोरपि ॥ १४ ॥

तानि नान्यत्र विश्वरूपाभ्यः ॥ १५ ॥

तानि ज्योतींषि नान्यत्र विश्वरूपाभ्यः प्रयोक्तव्यानि । विस्पष्टार्थमिदं वचनम् "विश्वरूपाश्चेद्गायेत्" ( १।८।१३ ) इत्यनेनैव विश्वरूपागानस्य ज्योतिर्गाने निमित्तत्वाऽवगमादिति ॥ १५ ॥

न चान्यत्र विश्वरूपा ज्योतिष्टोमात् ज्योतिष्टोमात् ॥ १६ ॥

विश्वरूपा अपि ज्योतिष्टोमात्प्रकृतिभूतादग्निष्टोमसंस्थादन्यत्र नभवेयुः । विकृति(२)ष्वति देशप्राप्तस्य विश्वरूपागानस्य प्रतिषेधोऽयमिति ॥
अन्तेऽभ्यासः पटलसमाप्तिद्योतकः ॥ १६ ॥

इति प्रथमस्याष्टमो कण्डिका ॥ १ ॥ ८ ॥ * ॥

( द्वितीयः पटलः समाप्तः )

---

( १ ) अपोनपाद्देवताऽस्येति विग्रहे "अपोनपान्नप्तृभ्यां घः" । "छ च" (पा० ४।२।२+२८) इति छप्रत्ययः । तत्सन्नियोगेन प्रकृतिरूपमपि निपात्यत इति ॥ छस्येयादेशः ( पा० ७।१।२ ) ॥

( २ ) "प्रकृतिवद्विकृतिः कर्तव्येति" जैमिनीयैः परिभाषितम् ॥

## अथ नवमी कण्डिका—

युगपत्कर्मसु सर्वेषूद्गातुर्दक्षिणमनुबाहुं प्रस्तोता सव्यं प्रतिहर्त्ता ॥१॥

अतोद्वितीयेन(१) सूत्रेण युगपत्सर्वेषामुद्गातॄणां कर्म वक्ष्यते। तस्य कोविधिरिति तं विवक्षुराह युगपदिति। उद्गातुर्दक्षिणं बाहुमनु-दक्षिणे-पार्श्वे प्रस्तोता स्यात् सव्यं वामं बाहुमनु प्रतिहर्त्ता स्यात्। कर्त्तारोऽप्येत एव त्रयोनान्य इत्यनेनैव सूत्रेणोक्तमन्यस्यानुपादानादिति ॥ १ ॥

होता प्रातरनुवाकमनूच्य "अभूदुषाः" इति यदा ब्रूयात् अथ वेदिमाक्रामेयुः "मृदा शिथिरा" इति ॥ २ ॥

होता प्रातरनुवाकशस्त्रमनूच्य यदा यस्मिन्काले "अभूदुषाः" इत्येतं शब्दं ब्रूयात्। अथ-अनन्तरं "मृदा शिथिरा" इत्यादिना "मा मा हिꣳसी"-रित्यन्तेन यजुषा वेदिमाक्रामेयुस्सर्वे उद्गातृ-प्रशास्तृ-प्रतिहर्त्तारः। मन्त्रोयथा-"ॐमृदाशिथिरा देवानान्तीर्थं वेदिरसि मा मा हिꣳसीः" इति ॥ २ ॥

बहिर्वेद्येतज्जपित्वा "मा मा हिꣳसीः" इत्येतावतैवेति धानञ्जप्यः (य्यः) ॥ ३ ॥

एतत्। "मृदाशिथिरा" इत्यादि "वेदिरसि" इत्यन्तं यजुर्बहिर्वेदि वेद्याअन्यत्र जपित्वा "मा मा हिꣳसीः" इत्येतावन्मात्रेणैव वेद्याक्रमणमिति धानञ्जप्यः (य्य) आचार्य्य आह ॥ ३ ॥

सवनमुखेषु च ॥ ४ ॥

जातावत्र बहुवचनम्। "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" (पा० १।२।५८) इति स्मरणात्। पवमानसवनं प्रकृतमुत्तरयोरपि सवनयोर्मुखे "मृदा शिथिरा" इति मन्त्रेणैव वेद्याक्रमणं(२) स्यात्। तत्राभिषवादि माध्यन्दिनं सवनम् आदित्यारम्भणं तृतीयसवनम् ॥ चशब्दोधानञ्जप्य-(य्य-) मतानुकर्षणार्थः ॥ ४ ॥

यजुषाऽहरहारीति गौतमः ॥ ५ ॥

---

(१) धन्वीतु "युगपत्कर्मकर्त्तव्यतया चोदितेषु बहुकर्तृकेषु कर्मसु कियन्तः स्तोत्रकर्तारः कथं वाऽनुष्ठानमित्यपेक्षायामिदमुच्यते" इत्थमिदं सूत्रमवतारयति स्म ॥

(२) अत्र अभूदुषाकाले आज्यानामन्ते निः सृप्य, पृष्ठानामन्तेच निःसृप्येति स्वामिभाष्येपाठः ॥

अहर्गणेषु चाहरहः प्रत्यहं सवनत्रयेऽपि मन्त्रेणैवा(१)क्रमणमिति गौतम आह ॥ ५ ॥

सकृत्कृताविति शाण्डिल्यः ॥ ६ ॥

एकाहेषु चाहर्गणेषु च, सर्वस्मिन्कृतावादावेव, सकृन्मन्त्रेण क्रमणं न सवनत्रये। नाप्यहरहरिति शाण्डिल्य आह ॥ ६ ॥

यावद्धा ऽऽक्रामयेयुरित्येके ॥ ७ ॥

यावद्धेति विधार्थे धा प्रत्ययः कृत्वसुजर्थे छान्दसः। यावत्कृत्वोवेदिमाक्रामेयुस्तत्र सर्वत्र मन्त्रणैवाक्रमणमित्येके प्राहुस्तेनातिरात्रे प्रतिपर्यायं निष्क्रान्तानां मन्त्रेणैव पुनः प्रवेशः ॥ ७ ॥

हविर्द्धानं प्रवेश्यमाना वसतीवरीरिनुप्राविशेयुः ॥ ८ ॥

हविर्द्धानं प्रवेश्यमाना अध्वर्यवो, वसतीवरीसंज्ञा अपोयदाऽपरया द्वारा प्रवेशयन्ति, तदा पूर्वया द्वारा ता अनूद्गातृप्रभृतयः प्रविशेयुः ॥८॥

तस्य रराट्यामालभ्य "विष्णोः शिर" इति ॥ ९ ॥

रराटी नाम हविर्द्धानस्य पूर्वद्वारोपस्थिता काशमयी यष्टिरिति सत्याषाढः। तस्यां(२) "विष्णोः शिर" इति मन्त्रेणालभ्य प्रविशेयुः। मन्त्रो यथा-"ॐ विष्णोः शिरोऽसि यशोधा यशोमयि धेहि" इति ॥९॥

"इष ऊर्ज्ज" इति प्रविशन्तः ॥ १० ॥

हविर्द्धानं प्रविशन्तः "इष ऊर्ज्जा" इत्येतदादि यजुर्जपेयुः। अपरे पुनः साकाङ्क्षमिदय्यँजुर्वर्णयन्ति "इष ऊर्ज्जा आयुषे वर्चसे च प्रविशाम" इति ॥ अत्र "प्रविशाम" इतिशेष इति सायणः ॥ १० ॥

अन्तरेणेषे बाहूनवहृस पार्ष्णीनुग्रच्छन्तो "युनज्मि" इति राजानमभिमृशेयुर्यः प्रातःसवनाय ॥ ११ ॥

उक्तयजुषा प्रविशन्तः। अन्तरेणेषे ईषयोरन्तरा ( मध्ये ) बाहूनवहृ-

---

( १ ) यजुः शब्दोहि यजत्यनेनेति समाख्यया मन्त्रमात्रमाभिधत्ते तत्रैव च जैमिनिना "तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः शब्द" इत्येवं त्रेधा व्यभाजि। इत्यदस्त्रयसिंज्ञामलभत। अथर्वा तु अमुत एव राजाऽभिषेकादीनि यजूंषि लक्षण—त्रयोपेतान्मन्त्रान्समग्रहीदस्याथर्वण इति नाम "चत्वारोवेदा" इति वचनव्यक्तिमूलम्। वेदे कोशे च "वेदास्त्रयस्त्रयी" इत्थमेवाभिधीयते ॥

( २ ) अत्राऽवच्छेदकत्वलक्षणं विषयत्वं सप्तम्यर्थः। "गृहीत्वा चाऽऽस्य केशेषु" इति वत्। आस्यकेशाऽवच्छेदेन चण्डं गृहीत्वेति तदर्थः। तद्वदिह रराट्यवच्छेदेन हविर्द्धानमण्डपं स्पृष्ट्वा प्रविशेयुरित्यर्थः ॥

त्याऽधः प्रसार्थं "युनज्मी"त्येतेन यजुषा यः प्रातः सवनाय विभक्तस्तं सोममभिमृशेयुः । अभिमर्शनाशक्तौ पादाग्रेण स्थित्वा पादस्य पृष्ठ-भागोद्यमनं स्यात्तन्निवृत्त्यर्थं (१)पार्ष्णीन् अनुद्यच्छन्त इत्युक्तम् ॥ मन्त्रोयथा—"ॐ युनज्मि ते पृथिवीमग्निना सह युनज्मि वाचं सह सूर्येण युक्तो वातोऽन्तरिक्षेण ते सहयुक्तास्तिस्रोविमृजः सूर्यस्य" इति ॥११॥

आविभक्तश्चेत्सर्वम् ॥ १२ ॥

चेत् यद्यविभक्तः सोमः स्यात् तदा सर्वमेव सोममभिमृशेयुः ॥१२॥

न चेत्प्राप्नुयुर्देशेनैव ॥ १३ ॥

चेत् यदि उपरि धृतं सोमं हस्तेन प्राप्तुं न शक्नुयुस्तदा देशेनैव प्र(२)सार्य बाहून् अवमृष्टं मन्यमाना मन्त्रं जपेयुः ॥ १३ ॥

प्रस्तोता प्रथमोऽपसर्पेत् ॥ १४ ॥

साम्प्रतं तेषां दक्षिणस्य हविर्द्धानस्य पश्चिमे प्रदेशे कर्म वक्ष्यते । तदर्थं प्रस्तोता सोममभीत्य हविर्द्धानयोर्मध्यतः प्रत्यङ्मुखः प्रथ(३)म-मन्यानतिक्रम्यापसर्पेत् गच्छेत् ॥ १४ ॥

तत उद्गाता ॥ १५ ॥

ततोऽनन्तरमुद्गाता अपिसर्पेत् ॥ १५ ॥

ततः प्रतिहर्त्ता ॥ १६ ॥

ततस्तत इति गतिक्रमः सर्वत्र सदःप्रवेशननिर्गमनादिषु कर्मसु बोध्यः ॥ १६ ॥

दक्षिणस्य हविर्द्धानस्य पश्चात् सव्यावृत उपविशेयु "ऋतस्य सदन" इति ॥ १७ ॥

द्वे हविर्द्धानसंज्ञके अनसी तयोर्दक्षिणस्य पश्चात् पश्चिमे प्रदेशे एव गत्वा सव्यावृतः सव्येन पार्श्वेनावर्त्तमाना(४)उपविशेयुस्त्रयोऽत्रापि

---

(१) गुल्फाधस्तनभागः पार्ष्णिः । "तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः" इत्यमरः ॥

(२) देशे एव हस्तं प्रसार्य मन्त्रं जपेयुरिति धन्विव्याख्यानेन सोमदेशाभिमुखं हस्तप्रसारणमुक्तं भवति । अतोऽत्र प्रकृत्यादित्वात् ( पा० २।३।१८ वा० ) तृतीया । अवच्छेदकत्वं तदर्थः "प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् । अवच्छेदकता बुद्धि-प्रकारत्वादि शंसति" इति हर्युक्तेः ॥

(३) गच्छेत्स्वयं प्रथम इति प्रथमयाऽभिधानं सूत्रे । प्रथममित्यत्यन्तसंयोगे द्वि-तीया ( पा० २।३।५ ) ॥

(४) सव्येनावर्त्तन्त इत्यर्थे क्विबत्र बोध्यः ॥

"ऋतस्य सदने सीदामि" इत्येतद्यजुः पठन्तः। अत्र जैमिनिः "अन्तरेण हविर्द्धाने गत्वा दक्षिणस्य हविर्द्धानस्य पश्चादप्रदक्षिणमुपविशन्ती"ति ॥ १७ ॥

पुरस्ताच्चोपरिष्टाच्चर्चः सर्वत्र जपेयुर्यासु करिष्यन्तः स्युः ॥८२॥

सर्वत्र सर्वेष्वपि स्तोत्रेषु यासु ऋक्षु स्तुतिं करिष्यन्तः स्युस्ता ऋचः पुरस्ताच्चोपरिष्टाच्चस्तोत्रस्य जपेयुः ॥ १८ ॥

विशेषमाह—

अत्र तु बहिष्पवमानस्य ॥ १९ ॥

ऋच इत्यनुवर्त्तते। अत्रास्मिन्नृतसदनदेशे यद्वा अस्मिन्नेव काले उपवेशनानन्तरं बहिष्पवमानस्तोत्रस्यर्चोजपेयुः। अत्र धन्वी–बहिष्पवमानादन्येषु स्तोत्रेषु यद्यपि पुरस्तादुपरिष्टादित्यविशेषचोदनादव्यवधानेषु गानानन्तरं जपः प्राप्तः तथापि स्तोमयोगात् पूर्वमेव पुरस्ताज्जपः। यजमानोपहवनानन्तरमुपरिष्टाज्जप इति मन्तव्यम् बहिष्पवमाने तथैव दृष्टत्वादिति ॥ १९ ॥

अभिषुते राज–"न्यृतपात्रमसीति" द्रोणकलशमालभ्य "वानस्पत्य" इतिप्रोहेयुः ॥ २० ॥

अध्वर्युभिः राजनि सोमे अभिषुते सति उद्गातृप्रभृतयः "ऋतपात्रमसी" त्यनेन यजुषा अक्षस्य पश्चादवस्थितं द्रोणकलशमालभ्य "वानस्पत्योऽसिइति मन्त्रेणाक्षस्याधस्तात्तं प्राञ्चं प्रोहेयुः "अधोऽधोक्षं द्रोणकलशं प्रोहन्ति" "प्राञ्चं प्रोहन्तो" ति श्रुतेः ॥ मन्त्रोयथा–"वानस्पत्योऽसि बार्हस्पत्योऽसि प्राजापत्योऽसि प्रजापतेर्म्मूर्द्धास्यत्यायुपात्रमसीदमहमिमं प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्च्चसाय" इति ॥ २० ॥

दक्षिणे पाणावुद्गाता दशापवित्रं कुर्वीत ॥ २१ ॥

शुक्लाभिरूर्णास्तु(१) काभिर्निर्मितं दशायुक्तं वासोदशापवित्रमुच्यते "स्वर्भानुर्वाआसुरः" इत्यारभ्य "तस्माच्छुक्लं पवित्रम्' इति श्रुतेः। यत्पूर्वमेव कलशेऽध्वर्युणा न्यस्तं तदध्वर्युणा दीयमानमुद्गाता दक्षिणे पाणौ कुर्वीत ॥ २१ ॥

अक्षश्चेदुपहन्युः पुनः प्रोहेयुः ॥ २२ ॥

चेत् यदि द्रोणकशंप्रोहन्तः कदाचित्प्रमादादक्षमुपहन्युः स्पृशेयुस्तदा पुनरपि द्रोणकलशमाकृष्यानुस्पृशन्त एव प्रोहेयुः। तदेव तत्र

(१) स्तुक्–स्तुका इति केशनाम, ॥

प्रायश्चित्तमित्यर्थः । अत्र ब्राह्मणम् "योऽस्यप्रियः स्यादनुस्पृशन्नक्षं प्रोहेत्" इति ॥ २२ ॥

अन्तेरेणाक्षविष्कम्भौ दशापवित्रं प्रास्येदनुपघ्नन् ॥ २३ ॥

अक्षस्योपरिष्टादीषाधारकं काष्ठमक्षस्तद्वदेव तिर्यगायतोविष्कम्भस्तावन्तरेण तयोरक्षविष्कम्भयोर्मध्यावकाशेन दशापवित्रं द्रोणकलशे प्रास्येदुद्गाता अनुपघ्नन् बाहुभ्यामक्षमस्पृशन् इत्यर्थः ॥ "अन्तरान्तरेण युक्ते" ( पा० २।३।४ ) इति षष्ठ्यर्थेद्वितीया ॥ २३ ॥

संहतौ चेदुभावुपरि ॥ २४ ॥

चेद् यद्यक्षविष्कुम्भौ संहतौ संश्लिष्टौ स्यातां तदा तयोर्मध्यावकाशेन प्रासनाशक्तेरुभा(१) वुपरि उभयोस्तयोरुपरि देशेनैव प्रास्येत् । अवकाशसम्भवे तु तेनैवावश्यं प्रासनं कार्यम् । "उपर्युपर्यक्षं पवित्रं प्रयच्छन्ति" इति श्रुतेरिति ॥ २४ ॥

सर्वं रथोपस्थमुपर्युपरि ॥ २५ ॥

अत्र "उभसर्वतसोःकार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु" इति ( पा० १।४।४८ वा० ) वचनात्षष्ठ्यर्थे द्वितीया ॥ अत्राम्रेडितान्तेष्विति प्रायिकमतोद्वितीया पूर्वत्र ॥ यदि तद्धविर्द्धानं सर्वमेव रथोपस्थं स्यात्तदा सर्वस्यैव रथोपस्थस्योपर्युपर्युपरिष्टाद्दशापवित्रं प्रास्येत्(२)२५

उत्तरेण रथजङ्घाᳬरथश्चेत् ॥ २६ ॥

चेद् यदि क्वचिच्छ्येनादौ रथोहविर्द्धानं स्यात्तदोत्तरेण रथजङ्घयोः दशाप्रवित्रं प्रास्येत् । सर्वेषु काम्येषु अनुपघ्नन् रथौ हविर्द्धाने भवत इति–( श्येनादिव्यभिचरणीयेष्वस्य–विषयः ) ॥ अत्र "एनपा द्वितीया" ( पा० २।३।३१ ) इतिद्वितीया अदूरे षष्ठ्यर्थे ॥ २६ ॥

इति प्रथमस्य नवमी कण्डिका ॥ १ ॥ ९ ॥

## अथ दशमी कण्डिका—

प्रत्याव्रज्य ग्रावणोयुञ्ज्यात् प्रदक्षिणमष्टमदेशेषु स्थवीयांस्यभ्यन्तराणि कृत्वा ॥ १ ॥

( १ ) अत्र षष्ठ्यर्थे द्वितीयेत्यनुपदं द्रष्टव्यम् ॥

( २ ) अग्निस्वामिनस्त्वित्थ व्याचख्युः । यदि तद्धविर्द्धान सर्वमेव रथोपस्थं स्यात् । अक्षाविष्कम्भाधानानि सर्वाण्येव लग्नानि स्युः सर्वेषामुपरिष्टाद्दशापवित्रं समीपेन प्रास्येत्" इति ॥

द्रोणकलशप्रोहणानन्तरमुपस्थाय ऋतसदनाद्यथागतमभिषवस्थानं प्रत्याव्रज्योद्गातृप्रभृतय उपविशेयुः। तत उद्गाता(१) ग्राब्णोयुञ्ज्यात् स्थापयेत्। ग्राब्ण इति द्वितीयाबहुवचनम्। चत्वारस्ते भवन्ति। प्रदक्षिणमिति। योजनानुपूर्व्यम्। अष्टमदेशेषु (२)अष्टमेषु दिङ्नागभागेषु। स्थवीयांस्यभ्य(३) न्तराणि कृत्वा। यानि स्थवीयांसि स्थूलतराणि तान्यभ्यन्तराणि कृत्वाऽल्पीयांसि चबाह्यानि इति ॥ १ ॥

तानि मुखानि ॥ २ ॥

तानि स्थवीयांसि मुखानीत्युच्यन्ते "संमुखान् ग्राब्णः कृत्वा", विमुखान् ग्राब्णः" इत्यादि ब्राह्मणमिति ॥ २ ॥

दक्षिणार्द्ध्य–पूर्वार्द्ध्यं प्रथमम् ॥ ३ ॥

दक्षिणेऽर्धेभवं दक्षिणार्द्ध्यं पूर्वे अर्द्धेभवंपूर्वार्द्ध्यं तयोः समाहारद्वन्द्वः "अर्धाद्यत्" (पा० ४।३।४ ) इति विधीयमानोयत्प्रत्ययः "परावराधमोत्तरपूर्वाच्च" ( ४।३।५) ति चकारादाभ्यामपिभवतीति गम्यते । तथा च दक्षिण-पूर्वकोणदेशस्थं ग्रावाणं प्रथमंयुञ्ज्यात्। उत्तरपूर्वदेशे समाप्तिरिति प्रदक्षिणस्थापनमेषाम् ॥ ३ ॥

तानभिमृश्य जपेयु–"मरुत" इति ॥ ४ ॥

तान्ग्राब्णो यथास्थानं दक्षिणपूर्वक्रमेण स्थापितान् अभिमृश्य स्पृष्ट्वा "मरुतः" इत्यादि "चातयध्वम्" इत्यन्तंयजुर्जपेयुस्त्रयोऽप्युद्गातृप्रभृतयः ॥ मन्त्रो यथा—"ॐमरुतोनपातोऽपाङ्क्षयाः पर्वतानाङ्कुभः श्येना अजिरा इन्द्रं वग्नुना वहत घोषेणामीवांश्चातयध्वं युक्तास्थ वहत" इति ॥ ४ ॥

ऋतसदनएतज्जापित्वा "युक्तास्थवहते"त्येतावतैवेतिधानञ्जप्यः( ज्यः ) ॥ ५ ॥

ऋतसदने-द्रोणकलशप्रोहणानन्तरं तत्रैवस्थाने एतदुक्तं "मरुत" इति

---

( १ ) धन्वीत्वत्र "एकवचनमविवक्षितम्। उत्तरसूत्रे "तानभिमृश्य जपेयु"–रितिबहुवचनश्रवणात्। जपस्यैव प्राधान्येन ग्रावयोजनस्याप्रधानत्वाच्च। किञ्च "ग्राब्णः संपाद्य द्रोणकलशमभ्यूहन्ती" ति श्रुतेः स्पष्टमेव ग्रावयोजनेऽपि कर्तृबहुत्वमिति" प्राह ॥

( २ ) अष्टमदेशः कोणदेशः। अभिषवचर्म्मणोर्मध्येऽवान्तरादिक्षु चतुरोग्राब्णः प्रदक्षिण युञ्ज्यात् तेषां ग्राब्णां स्थवीयांसि स्थूलतरान्प्रान्तभागानभ्यन्तरान्कृत्वा युञ्ज्यादिति धन्विव्याख्यानम् ॥

( ३ ) नपुंसकनिर्देशः स्थानमभिदधत् ग्राब्ण एव प्रान्तभागानाह। लिङ्गसामान्यनपुंसकमेतत् ॥

यजुर्जपित्वाततः प्रत्याव्रज्य "युक्तास्थवहत" इत्येतावन्मात्रेण ग्रावाभिमर्शनमितिधानञ्जप्यः (प्यः)। "ऋतस्यसदने सीदामि" इति मन्त्रेण यत्रोपविश्यते तदृतसदनं, दक्षिणहविर्द्धानस्य पश्चाद्देशः ॥ ५ ॥

पश्चाद्दक्षिणतोवा द्रोणकलशमध्यूहेयु–"रिदमहममुमिति" यजमानशब्दं सर्वत्र यथार्थं कुर्युः ॥ ६ ॥

अभिषवण(१)चर्मणि ग्राव्णां पश्चात् पश्चिमे प्रदेशे दक्षिणे वा द्रोणकलशमध्यूहेयुः ॥ "इममहममुम्" इत्यनेन यजुषा । यश्चास्मिन् यजुषि यजमानशब्दस्तमेकद्विबहुषु यथार्थं यथायोग्यं कुर्युः। ऊहेयुरित्यर्थः। सर्वत्र सर्वेष्वेवान्येष्वपि यजुःषु सत्रमात्रे ॥ मन्त्रोयथा–ॐइदमहममुं यजमानम्पशुष्वध्यूहामि पशुषु च मां ब्रह्मवर्च्चसे च" ॥ इति ॥ ६ ॥

अनुजपेयुरन्येन कृते मन्त्रौ ब्राह्मणविहितादन्यत्र ॥ ७ ॥

अन्येनाध्वर्युणा कृते ग्रावयोजनाध्यूहने योजनाध्यूहनमन्त्रावनुजपेयुरुद्गातृप्रभृतयो न पुनर्ग्रावयोजनादिकुर्युः। एवं नित्यस्य ग्रावयोजनादेः कल्प उक्तः। ये पुनर्ब्राह्मणे विहिताः "यं द्विष्याद्विमुखान्ग्राबणः" इत्यारभ्य चत्वारः कल्पास्तेभ्योऽन्यत्र, न तेष्वनुजपोऽस्ति स्वयमेव अध्वर्युणा ते कर्त्तव्याः ॥ नन्वयमपि प्रथमः कल्पो "ग्राबणः संपाद्य द्रोणकलशमध्यूहन्ति" इति ब्राह्मणविहित एव। सत्यम्। किन्तु संसदनाध्यूहने श्रुते न तु योजनाध्यूहनमन्त्रौ नियुक्तौ ब्राह्मणेन इति ॥ ७ ॥

एष कल्पः काम्यानां द्वेष्यकल्पादन्यत्र ॥ ८ ॥

योऽयं प्रथमः कल्प उक्तः "प्रत्याव्रज्यग्राव्ण" इत्यारभ्य एष कल्पो विधिः काम्यानाम्। किं सर्वेषां ? न, किन्तर्हि द्वेष्यकल्पादन्यत्र ॥ ९ ॥

विपर्यस्य तु तस्मिंस्तूष्णीञ्च योजनाध्यूहने ॥ ९ ॥

तस्मिन्द्वेष्यकल्पे नित्यकल्पोक्तं प्रकारं विपर्यस्यानुष्ठेयम्। योजनाध्यूहने ग्राव्णां योजनं द्रोणकलशस्य चाध्यूहनं ते तूष्णीम्भवेताम् ॥ ९ ॥

"इदमहममुमिति" दक्षिणापरमष्टमदेशं निरूहेत् ॥ १० ॥

एवंनित्योक्तप्रकारं विपर्यस्य तूष्णीं ग्रावयोजनादि च कृत्वा "इदमहममुम्" इत्यादि ब्राह्मणपठितेन मन्त्रेण दक्षिणापरं कोणदेशं प्रति द्रोणकलशं निरूहेत् उद्धरेत् ॥ १० ॥

द्वेष्यप्रियकल्पयोर्मन्त्रौ राजन्यूहेत् ॥ ११ ॥

---

(१) युक्तानां ग्राव्णामुपरिष्टाद्द्रोणकलशं पश्चादारभ्य प्राञ्चं स्थापयेयुः। दक्षिणत उदञ्चं वेति धन्व्यत्र व्याख्यत्।

द्वेष्यस्य प्रियकल्पस्य च मन्त्रौ ब्राह्मणपठित राजन्यैवोहेत्प्रतीयात् न ब्राह्मणवैश्ययोः। राजैकविषयावेतौ (१)कल्पावित्यर्थः ॥ ११ ॥

तस्य च विशमादिशेत्ताश्चैवान्नाद्येन ॥ १२ ॥

तस्य च राज्ञः विशं प्रकृतिवर्गम् "अमुष्याविश" इत्येवं नाम्ना। निर्दिशेत्। चकारोभिन्नक्रमः। तामेव च विशम्पुनस्तदापन्नेनान्नाद्येन सह निर्दिशेत्। तदापन्नमन्नाद्यमपि नाम्ना निर्दिशेदिति यावत्। तद्यथा "इदमहं युधिष्ठिरं भारतं कुन्त्याः पुत्रं भीमार्जुनादिरूपायां विशि कुरुक्षेत्रराज्यरूपेऽन्नाद्येऽध्यूहामि" इति। अन्नाद्यशब्दोभोग्यवचनः ॥१२॥

उपांशुसवनोनाम ग्रावा पञ्चमस्तमुपरिष्टाद् द्रोणकलशस्य कुर्यात राष्ट्रजिघांसुः प्रतीवेशां बलवतीं विशमादिशन् ॥ १३ ॥

अत्र ब्राह्मणम् "यः कामयेत विशा राष्ट्रं हन्यामिति व्यूह्य ग्राव्णोऽधोद्रोणकलशं सादयित्वोपांशुसवनमुपरिष्टादभिनिदध्यात्। "इदमहममुया विशाऽदो राष्ट्रं हन्मीति" तद्ध्याचष्टे उपांशुसवन इति। उपांशुग्रहाभिषवार्थोग्रावा उपांशुसवनः पञ्चमः। चतुर्षु ग्रावसु योजितेषु द्रोणकलशाध्यूहने च नित्यवत्कृते पश्चाद्ग्राव्णः पृथक् कृत्य मध्ये भूमौ द्रोणकलशं सादयित्वा तं पञ्चमं ग्रावाणं द्रोणकलशस्योपरिष्टात्कुर्यात् द्रोणकलशे प्रहरन्निव प्रास्येत्। "इदमहममुया" इति मन्त्रेण, प्रतीवेशां राष्ट्रप्रतिपक्षभूतां विशं बलवतीमादिशेत्। स्वामिद्वारेण बलवत्त्वम्। यथा "युधिष्ठिराधिष्ठितया भीमार्जुनादिरूपया विशा कुरुक्षेत्रं राष्ट्रं हन्मि" इति। अयञ्चकल्पः स्वकीयेनैव राष्ट्रेण यस्य राज्ञोविरोधोजातस्तस्येति मन्तव्यम्। केचित्तु प्रतियोगिनोराज्ञः प्रकृतिवर्गः प्रतीवेशा विट् तया प्रतियोगिनो राष्ट्रं जिघांसुरिति व्याचक्षते। प्रतीवेशामिति "उपसर्गस्य घञि" ( पा० ६।३।१२२ ) इति दीर्घो बाहुलकादत्र कर्त्तरि घञ्। स्त्रियाम् ॥ १३ ॥

एतेषामेकं कृत्वा पथ्यं कुर्यादिति गौतमः ॥ १४ ॥

एतेषां काम्यकल्पाना-( म्योऽर्थस्य चिकीर्षितस्त-) मेकं कृत्वा पुनस्तदानीमेव क्रत्वर्थतया पथ्यं—नित्यं कुर्यादिति गौतम आचार्यो मन्यते ॥ १४ ॥

---

( १ ) राज्ञो हि प्रकृतिवर्गोविश इत्युच्यते नचासौ राज्ञोऽन्यत्र सम्भवति। येन "यं द्विष्यात्" "योस्य प्रियः स्यात्" इत्यविशेषोक्तावपि "ये राजानं द्विष्यात्" "यो वाऽस्य राजा प्रियः स्यात" इति ब्राह्मणार्थः। "अमुष्या विशोनिरूहानि" इति निरूहणस्य राजैकविषयत्वाऽवगमादिति धन्विव्याख्याऽत्र ॥

तमेवेति धानञ्जप्यः ( य्यः ) ॥ १५ ॥

तमेव (१)कल्पं कृत्वाऽथान्यत्कर्म प्रतिपद्येत नैव पथ्यं कुर्यादिति धानञ्जप्य ( य्य ) आचार्यो मन्यते ॥ १५ ॥

पृष्ठानामन्ते पूर्वया द्वारा सदसोनिष्क्रम्य काम्यᳬशाण्डिल्यः॥१६॥

पृष्ठस्तोत्राणामन्ते माध्यन्दिने सवने संस्थिते पूर्वया द्वारा सदसोनिष्क्रम्य काम्यं ग्रावयोजनं पृथगेव कुर्यात् । स्वस्थाने तु सर्वत्र नित्यमेव कुर्यादिति शाण्डिल्य आचार्योमन्यते ॥ १६ ॥

नित्ये योजनाध्यूहनप्रकरणे काम्यानां कल्पानां प्रसङ्गाद्विधिरुक्तः साम्प्रतमनन्तरां कर्मप्रतिपत्तिं विवक्षुराह—

पवित्रेण द्रोणकलशंसम्मृज्यात् "वसवस्त्वा" इति बुध्नम् "रुद्रास्त्वा" इति मध्यम् "आदित्यास्त्वा" इति बिलम् ॥ १७ ॥

पुनन्त्यनेनेति पवित्रन्तेन दशापवित्रेण द्रोणकलशं सम्मृज्यादुद्गाता । "वसवस्त्वा" इत्यनेन यजुषा द्रोणकलशस्य बुध्नं मूलं "मूलं बुध्नोऽङ्घ्रिनामकः" इत्यमरः । सम्मृज्यात् । "रुद्रास्त्वेति" मध्यम् । "आदित्यास्त्वेति" विलम् अन्तश्छिद्रम् संमृज्यादित्यर्थः ॥ मन्त्रोयथा–"ॐ वसवस्त्वा गायत्रेण च्छन्दसा सम्मृजन्तु । रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा सम्मृजन्तु । आदित्यास्त्वा जागतेन च्छन्दसा सम्मृजन्तु" इति ॥१७॥

एतेषामेकैकेन त्रिस्त्रिरनुसवनᳬसंमृज्यादितिधानञ्जप्यः (य्यः)॥१८॥

एतेषां वसवस्त्वेत्यादीनां यजुषामेकैकेन त्रिस्त्रिरनुसव(२)नं संमृज्यादिति धानञ्जप्य ( य्य ) आचार्य आह । नात्र बुध्नादिनियमोऽनुक्तत्वादिति ॥ १८ ॥

सर्वैः सर्वेष्विति शाण्डिल्यः ॥ १९ ॥

सर्वैर्यजुर्भिरुक्तैर्वसवस्त्वेत्यादिभिः । सर्वेषु सवनेषु सर्वाणि स्थानानि संमृज्यादिति शाण्डिल्य आचार्योमन्यते ॥ १९ ॥

अवधूय पवित्रमुदग्दशमवाङ्नाभि वितनुयुः "पवित्रन्ते" इति ॥ २० ॥

---

( १ ) द्राह्यायणीये तदेवेति पाठः । तदेव काम्यकर्तोरप्युपकरणं पुनर्नित्यमपेक्षणीयमिति मन्यते ( धानञ्जप्यः )

( २ ) "वसवस्त्वे"ति प्रातः सवने सर्वाणि स्थानानि सम्मृज्यात् । "रुद्रास्त्वे"ति माध्यन्दिने सवने । "आदित्यास्त्वे"ति तृतीये ( सायं ) सवने सर्वाणि स्थानानि संमृज्यादित्यर्थः ॥

दशापवित्रस्य मध्ये शुक्लामूर्णास्तुकां सोमधारास्रावणार्थं यजमानः करोति। सा नाभिरित्युच्यते। पवित्रं दशापवित्रमवधू उदग्दशमुदीचीनदशमवाचीननाभि च तत्कृत्वा द्रोणकलशस्योपरिष्टात् "पवित्रन्ते" इत्येतयर्चा वितनुयुः विस्तारयेयुः। उपरि च वितत्य दशापवित्रस्य कोणं धारयेयुः। तथाच ब्राह्मणम् "पवित्रं विगृह्णन्तीति"। वितत्य धारणं विग्रहणम्॥ मन्त्रोयथा—"ॐ पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्त तनूर्न तदामो अश्नुते श्रृतास इद्वहन्तस्तदाशत"॥ इति॥ २०॥

सन्ततायां धारायामुद्गाता जपेत् "प्रशुक्रैतु" "त्यमुष्यराज्याये"ति प्रियं राजानमादिशेत्॥ २१॥

पूयमानस्य सोमस्य सन्ततायामविच्छिन्नायां धारायामुद्गाता(१) "प्रशुक्रा" इत्येतद्यजुर्जपेत। अत्र (यजुषि) "अमुष्य राज्याय" इत्येतस्य सर्वनाम्नः स्थाने योयस्य प्रियः स्यात्तं राजानमादिशेत्॥ मन्त्रोयथा—"प्रशुक्रैतु देवी मनीषाऽस्मद्रथः सुतष्टो न वाज्यायुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्यादिवोजनित्राच्छृण्वन्त्वापोऽधः क्षरन्तीः सोमेहोद्गाय ममायुषे मम ब्रह्मवर्चसाय यजमानस्यर्ध्या अमुष्य राज्याय" इति॥ २१॥

"राज्ञोराज्याये"ति वा "यजमान(२)स्य—(र्ध्यै) राज्ञोराज्याये"ति वा॥ २२॥

अथवा "राज्ञोराज्याये"ति सामान्येनादिशेत्। अथवा यदा क्षत्रियोयजमानस्तदा "अमुष्ये" त्यस्य स्थाने यजमानस्य दूर्ध्यै यजमानस्यराज्ञोराज्यायेतिनिर्दिशेत्॥ २३॥

सोमस्य राज्ञोराज्येति वा॥ २३॥

अथवा यजमानस्य सोमस्य राज्ञोराज्यायेति निर्दिशेत्॥ २३॥

तमेव पक्षं स्थापयति—

सोमस्येत्येव ब्रूयात्सोमराजानोहि ब्राह्मणाः॥ २४॥

एवशब्दोऽवधारणार्थः। हि यस्मात्सोम एव ब्राह्मणानां राजा (शु० य० ९।४०) तस्मात्सोमस्यराज्ञ इत्येव निर्देशः। क्षत्रियवैश्ययोरपि

(१) पवित्रविताने त्रयाणामप्यन्वयादितरयोर्निवृत्त्यर्थमुद्गातुर्ग्रहणम्॥

(२) यजमानस्य राज्ञोराज्यायेति बहुषु पाठस्त्वेऽप्यग्निस्वामियाख्यामनुसृत्य "दूर्ध्यै" इति धृतम्॥

दी(१)क्षयैव ब्राह्मणत्वात् । सोमस्येत्येव तयोरपि निर्देशः । "ब्राह्मणोवा एष जायते योदीक्षितः" इति श्रुतेः ॥ २४ ॥

आग्रयणं गृह्णन्नध्वर्युर्हिङ्कुरोति तदा प्रवृणीर—

"अग्निः प्रस्तोता(२)हं मानुषो, बृहस्पतिरुद्गाताऽहं मानुषो, वायुः प्रतिहर्त्ताऽहं मानुष" इति ॥ २५ ॥

आग्रयणोनाम(३)ग्रहस्तं गृह्णन्नध्वर्युस्त्रिर्हिङ्कुरोति । तदा तस्मिन्काले प्रवृणी(४)रन् "अग्निः प्रस्तोते" त्येतदादिभिर्य्यथासूत्रितैर्वृतप्रतिमन्त्रणार्थम् ॥ २५ ॥

अथ "यदाग्रयणेत्रिर्हिङ्कुरोति तेनवास्योद्गातारोवृता भवन्ति" इत्याम्नायतेऽतः—

न प्रवृणीरन्निति धानञ्जप्यः ( य्यः ) ॥ २६ ॥

धानञ्जप्य ( य्य ) आचार्य आह न प्रवृणीरन् इति । अथाऽपि यतइमे पूर्वम् वृता एव । द्रोणकलशोपसदनेन "यद्द्रोणकलशमुपसीदन्ति तेनोद्गातारोवृताः । द्रोणकलश(५) एवैनानात्विर्ज्याय वृणीते" इति श्रुतेः॥

प्रवृणीरन्नेवेति शाण्डिल्यः ॥ २७ ॥

शाण्डिल्य आचार्यः प्रवृणीरन्नेवेत्याह । प्रतिनिमित्तं हि नैमित्तिकानि भवन्ति । अपि चार्थस्यादूषकः "अलोपश्च लोपान्न्यायतर" इति ॥

अत्र वाचय्यँच्छेयुः ॥ २८ ॥

अत्रास्मिन्काले प्रवरणानन्तरं त्रयोऽपि वाचम् यच्छेयुः वाग्यमनङ्कुर्युः ॥ २८ ॥

---

( १ ) अतोयुध्यन्ब्राह्मणोऽपि क्षत्रिय एव तदानीमिति द्रोणोहतोऽर्जुनेनेति भारतम्

( २ ) अत्र यथालिङ्गम्" इत्यधिकः पाठोद्राह्यायणीये । तथाचायमर्थः । यथालिङ्गं मन्त्रैर्देवान् उद्गातॄन्प्रवृणीरंस्त्रयोऽपि। तद्यथा अग्निरेव प्रस्तातोऽस्तु स एव हि सर्वं वेद अहं तु मानुषः प्रस्तोता तदाधिष्ठितोयथाशक्ति करोमीति । एवमन्यावपि । यथाध्वर्युर्देवं होतारं वृणीते वृतस्सन् ' 'अग्निर्देवोदैव्योहोता" "देवान्यक्षत्" इत्यादि । तद्वदेवैतत् ॥

( ३ ) पात्रविशेषोग्रहपदवाच्यः ॥

( ४ ) प्रवरणमभ्यर्थनम् ॥

( ५ ) एतद्धि कर्तृपदम् । अत्र ब्राह्मणेन चोदितम् । "यान्वित्याहुर्वाचाऽन्यानृत्विजोवृणीते । कस्मादुद्गातारोऽवृता आर्त्विज्यं कुर्वन्ति" इति । तेनर्त्विगन्तरवदुद्गातॄणामपि वरणङ्कार्यमिति प्राप्ते "यद्रोणकणशमुपसीदन्ती" त्यादिना द्रोणकलशोपसात्तिमात्रेण वरणङ्कृतन्न पृथक्कार्यमिति दर्शितम् ॥

ऋतसदने वा ॥ २९ ॥

अथवा "ऋतस्य सदने सीदामि" इति मन्त्रेण यत्र पूर्वमुपविष्टं तस्मिन्नृतसद(१)नस्थाने एवोपविश्य तदा(२)प्रभृति वाग्यताः (मौनाः) स्युः ॥ २९ ॥

वेदिं वा क्रामन्तः ॥ ३० ॥

अथ वा "मृदा शिथिरा" इति मन्त्रेण वेदिमाक्रामन्ति ( अभूदुषा काले ) तदाप्रभृति वाग्यताः स्युः ॥ ३० ॥

स्तुते बहिष्पवमाने विसृजेरन् ॥ ३१ ॥

बहिष्पवमाने स्तोत्रे स्तुते वाचं विसृजेरन्नोन्तरा कदाचित् ॥ ३१ ॥

इति प्रथमस्य दशमी कण्डिका ॥१॥१०॥

---

## अथैकादशी काण्डिका ।

उत्तराद्धविर्द्धानाद्ध्रुवस्थालीम् हरन्तः पश्चिमेनोद्गातॄनृहृत्वा तेनैव प्रतिहरेयुः ॥ १ ॥

ग्रहग्रहणाधिकारोवर्त्तते । गृहीतेषु सर्वेषु ग्रहेषु ध्रुवोगृह्यते तत्रोद्गातृसम्बद्धं किञ्चिद्विवक्षुराह—उत्तरादिति । हविर्द्धानसंज्ञके द्वे अनसी दक्षिणमुत्तरञ्च । हविरस्मिन् निधीयते इति हविर्द्धानम् । ध्रुवोनाम ग्रहः स यस्यां स्थाल्यां गृह्यते तां ध्रुवस्थालीं यदाऽध्वर्यवः उत्तरहविर्द्धानाद्ध्रुवग्रहणार्थम् हरन्ति तदा ते उद्गातॄणां पश्चिमेन प्रदेशेन हृत्वा गृहीते सोमे तेनैव प्रतिहरेयुः पुनर्नयेयुः अव्यवायार्थम् नित्यं परकर्तृकेषु बहुवचनम्। "नैनान(३)परेण हरेयुरपि ह्यकुशला अध्ववोर्यभवन्ती"ति॥१॥

अध्वर्युं निष्क्रामन्तं प्रस्तोता सन्तनुयात् ॥ २ ॥

हविर्द्धानद्वारेण वैप्रुषहोमार्थम् निष्क्रामन्तमध्वर्युम् प्रस्तोता सन्तनु-

---

( १ ) दक्षिणस्य हविर्द्धानस्य पश्चादृतसदनम् यत्र "ऋतस्य सदने सीदामी"तिपठित्वा ऋत्विजः सीदन्ति उपविशन्ति ॥

( २ ) तत एवारभ्य बहिष्पवमान-( स्तोत्र-)-स्तुतिर्यावद्देशं वाक्संयमोऽनेन विधीयते । स च "नायज्ञियां वाचं वदेत्" इति नियमानुसृतस्तेन यज्ञार्थादन्यत्र वाक्प्रसरः प्रतिषिध्यते ॥

( ३ ) द्रोणकलशस्योद्गातॄणाञ्च न मध्यमदेशेन हरेयुरित्यर्थः । ननु चाध्वर्युकृत्यं किमत्रविधीयतेऽत आह—अपीति । अपिह्यध्वर्यवोऽप्यकुशला भवन्तीति । अध्वर्यवोऽप्यस्मिन्नर्थे कदाचिदकुशलाः स्युः । तत्सूत्रेष्ववचनादतोऽस्माभिरेतदुक्तमध्वर्युभिरत्रावहितैर्भवितव्यमिति ॥

यात् उत्तरीयैकदेशे गृह्णीयादविच्छेदार्थम् ॥ २ ॥

तमुद्गाता ॥ ३ ॥

तम्प्रस्तोतारमुद्गाता सन्तनुयात् ॥ ३ ॥

उद्गातारं प्रतिहर्त्ता ॥ ४ ॥

सन्तनुयादिति वर्त्तते ॥ ४ ॥

तं ब्रह्मा ॥ ५ ॥

तं प्रतिहर्त्तारं ब्रह्मा सन्तनुयात् ॥ ५ ॥

ब्रह्माणं यजमानः ॥ ६ ॥

सन्तनुयादिति वर्त्तते । विच्छेदे हि प्रायश्चित्तश्रवणात्सर्वे सन्तता भवन्ति ॥ ६ ॥

न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरन् ॥ ७ ॥

साम्प्रतमेतेषामाज्यहोमोवक्ष्यते, तैश्चसोमः पूयमानः स्पृष्टोऽत आह नेति । सर्वत्र राजानं सोममालभ्य स्पृष्ट्वा आपोऽनुपस्पृश्याचमनम कृत्वाऽऽज्यं घृतन्नालभेरन्नस्पृशेरन् ॥ ७ ॥

तथाऽऽज्य ँ राजान ँ सर्वत्र ॥ ८ ॥

तथाज्यमालभ्यानुपस्पृश्यापोराजनं सोमं नालभेरन् । सर्वशब्दः ऋतेऽप्याज्यालम्भादनुपस्पृश्यापोनैव सोममालभेरन्निति गमयति ॥ "वज्रोवा एष सोमस्य यदाज्यम" इति श्रुतिस्तयोराज्यसोमयोरसङ्गतिमाह ॥ ८ ॥

अध्वर्युणा हुते प्रवृतहोमौ जुहुयुर्गत्यानुपूर्व्येण "वेकुरानामासि" "सूर्यो मा" इति ॥ १ ॥

अध्वर्युणा हुते वैप्रुषहोमेकृते सर्पण(१)क्रमेण त्रयोऽपि यथासूत्रिताभ्यां मन्त्राभ्यां प्रवृतहोमौ जुहुयुः । प्रवृतहोमाविति संज्ञा(२) । मन्त्रोथा—

(१) प्रस्तोता प्रथमोऽतिसर्पेत् । तत उद्गाता ततः प्रतिहर्त्तेति गत्यानुपूर्व्यम् । ननु किमर्थमिदमुच्यते यावता प्रस्तोतृद्गातृप्रतिहर्त्तृणामानुपूर्व्यमुक्तं होमेऽपि ग्रहीष्यत इति । अत्रोच्यते । गत्यारम्भेणाऽन्योऽपि योहोमस्तत्रापि गत्यानुपूर्व्यमेव स्याद्यथाग्नीध्रीये द्वे आहुती जुहुयुरिति ॥

(२) रक्षोभ्यस्त्राणाय देवानां यज्ञे बृहस्पतिना प्रार्थितानां सूर्यादीनां देवैः प्रार्थिताया वाचश्च यौ होमो तौ प्रवृतहोमौ । अत्र "बृहस्पति र्वैदेवानामुदगायत" इति ब्राह्मणे स्पष्टोऽयमर्थ इति ॥ होमश्चायं—सव्यहस्तेनेत्याहुः । अन्वारम्भवेलायामसंजातविरोधिना दक्षिणेन हस्तेनान्वारम्भात् । तद्विच्छेदस्य चायुक्तत्वात् । उत्तरत्र सव्यैः पाणिभिस्तृणनिरसनविधानाच्च ॥

"ॐ वेकुरा नामासि जुष्टा देवेभ्योनमोवाचे नमोवाचस्पतये देवि वाग्यत्ते वाचोमधुमत्तस्मिन्मा धाः सरस्वत्यै स्वाहा" इति। "सूर्योमा दिव्याभ्यो-नाष्ट्राभ्यः पातु वायुरान्तरिक्षाभ्योऽग्निः स्वाहा" इति च ॥ ९ ॥

सᳬसुतसोमे त्वाधिकामुद्गाता जुहुयात् "संवेशायोपवेशाये"ति यथासवनं छन्दांस्यादिशन् ॥ १० ॥

संसुतसोमे। संसुते (१)सोमे प्रवृत्तहोमानन्तरमुद्गाताऽधिका-मेकामाहुतिं जुहुयात्। "संवेशायोपवेशाय" इति ब्राह्मणपठितैर्मन्त्रैर्यथा सवनं छन्दांस्यादिशन्। "संवेशायोपवेशाय गायत्र्यै छन्दसे अभि-भूतये स्वाहा" इति प्रातः सवने। "संवेशायोपवेशाय त्रिष्टुभे" इति माध्यन्दिने। एवं "जगत्या अभिभूत्यै" इति तृतीयसवने। यथा सवनमि-त्येकस्मिन्नेव सवने न त्रयोऽपि मन्त्राः स्युरिति ॥ १० ॥

"ऋचᳬसामे"ति स्वाहाकारान्तया तृतीयां सर्वत्र स (२)ए-वेति शाण्डिल्यः ॥ ११ ॥

"ऋचᳬसामे"ति स्वाहान्तयर्चा तृतीयामाहुतिं स उद्गातैव जुहु-यात्। सर्वत्र संसवे चासंसवे (३)चेति शाण्डिल्य आह ॥ ११ ॥

महागिरिमहानदीरथाहृव्र्वायुव्यवायेष्वसंसवः ॥ १२ ॥

महागिरिभिर्विन्ध्यादिभिर्महानदीभिर्गङ्गादिभिश्च व्यवाये व्यवधाने असंसवः ससंवो न(४) भवति। तथा—यावति प्रदेशे महावातः (पूर्वः (५)पश्चिमोवा) वाति तावता व्यवायेऽपि। एवमेकस्मिन्नहनि यावन्तं

(१) अत्र धन्वी—पृथक्प्रयोजनानां युगपदेकस्मिन्देशे सुत्यायां संसवः। तस्मि-न्संसुते सोमे इत्यादि व्याचख्यौ। तेन संसवदोषाभावायाधिकाऽऽहुतिर्विधीयते। दोषश्च यजमानानां परस्परं विद्वेषः। अहमहमिकाहं पूर्विकावेति प्रतीयते ॥

(२) द्राह्यायणीय तु स एवेत्यादि सूत्रयित्वा स एवोद्गाता प्रवृत्तहोमौ जुहुयात्। नेतराविति शाण्डिल्यः, "बृहस्पतिर्वैदेवानामुदगायत" इति ब्राह्मणेनोद्गातुरेव प्रवृत्तहोमविधा-नात्। पक्षान्तरस्य मूलन्तु "उद्गातारोवै वाचो भागधेयं कुर्वन्ति" इति तत्रैव ब्राह्मणे बहुवचननिर्देश इति ॥

(३) अयम्भावः। पूर्वोक्तसंसवदोषाभावाय प्रवृत्तहोमान्ते द्वितीयाहुतिर्यथासवनं पूर्वसूत्रेण विहिता। इयञ्च तृतीया सर्वत्रैव होतव्येति ॥

(४) दोषाधायकः संसवोन भवतीत्यर्थः। तथाचात्र धन्वी–महागिर्यादिभिर्व्यवाये संसवदोषोनास्तीत्याह ॥

(५) अत्राग्निस्वामिनः। पूर्वपश्चिमवातैर्वायुव्यवायोगृह्यते अन्यथा सर्वदा सम्भ-वादित्याहुः ॥

देशं रथोगन्तुं शक्नोति तद्रथाहरित्युच्यते। तेन देशेन व्यवायेऽपि । राज-दन्तादिवत्परनिपातः ॥ १२ ॥

पृथग् जनपदे च ॥ १३ ॥

पृथग् जनपदे तु पुनः पुनरव्यवायेऽपि महागिर्यादिभिः, संसवोन (१)भवति । पृथग् जनपदः पञ्चाला मत्स्याः कुरव इति ॥ १३ ॥

अविद्विषाणमात्रादित्येके ॥ १४ ॥

अविद्विषा(२) णमात्रादेवासंसव इत्येके आचार्या मन्यन्ते ॥ १४ ॥

हुत्वा जपेयु"र्ब्रह्माहं गायत्रीं वाचं प्राणं प्रजापतिं प्रपद्ये ऽश्मानमाखणं पर्यूहे" इति ॥ १५ ॥

यदा सर्वैर्हुतं भवति अथ "ब्रह्माहमि"त्येतद्यजुर्जपेयुस्त्रयोऽपि ॥१५॥

अध्वर्युमन्वावर्त्तेरन्सर्प्पन्तः ॥ १६ ॥

येन पथा येन च प्रकारेणाध्वर्युः सर्पति तेनैव पथा तेनैव च प्रकारेणतमन्वावर्त्तेरंस्त्रयोऽपि ॥ सर्प्पन्त इत्यारभ्यते उत्तरयोरपि सवनयोरेवमेव स्यादिति ॥ १६ ॥

सव्यैः पाणिभिः पृथग् दक्षिणा तृणानि निरस्येयु-"र्योऽद्य सौम्य" इति ॥ १७ ॥

सर्प्पन्त इत्येव । अन्वारम्भे दक्षिणहस्तस्य व्यावृत्तत्वात्सव्यैरिति वचनम् । किञ्चिद् गत्वा सव्यैर्वामैः पाणिभिर्हस्तैः । पृथक् नाना । दक्षिणा दक्षिणस्यां दिशि अदूरे । तृणानि निरस्येयुः । "योऽद्य सौम्यः" इति यजुषा । निरासः प्रक्षेपः ॥ दक्षिणेत्याजन्तम् ( पा ५।३।३६ ) मन्त्रोयथा "ॐ वयोऽद्य सौम्योवधोऽद्यायूनामुदीरते विषूकुहस्य धन्वनाऽप तान् वरुणोऽधमत्' इति ॥ १७ ॥

चात्वालदेशं प्राप्याध्वर्यावुपविष्टे तस्मात्प्रत्यगुपविशेयुः—

" योम आत्मा" इति ॥ १८ ॥

वेद्युत्तरांशशङ्कुमारभ्य प्रत्यक् पदचतुष्टयं मीत्वा तस्योत्तरतोऽपि

( १ ) व्यवायाभावेऽपि जनपदभेदे संसवदोषोनास्तीति धन्वी प्राह ॥

( २ ) अत्र धन्वी । अविद्विषाणेति भावपरोनिर्देशः । यजमानयोरन्योन्यमविद्विषाणत्व(मविद्वेष)मात्रादेव ससवदोषोनास्ति नान्यदपेक्षणीयमित्येके इति । अस्यायंभावः। सति-परस्परं विद्वेषे संसवस्तदपहाराय यथासवनं छन्दांस्यादिशन् सवेशायेत्यादिभिरेकाहुतिरधिकाऽपेक्ष्यते । साऽविद्वेषे नापेक्ष्यत इति ॥

तावदेव मीत्वा तत्राभितश्श(१)म्यामात्रश्चात्वालस्ततसन्निकृ(२)ष्टदेशं प्राप्याध्वर्यावुपविष्टे तस्मात् अध्वर्योः प्रत्यक् पश्चिमे देशे "योम" इत्यादिना यजुषोपविशेयुः । मन्त्रो यथा—ॐ योम आत्मा या मे प्रजा ये मे पशवस्तैरहम्मनोवाचं प्रसीदामि"–इति ॥ १८ ॥

प्रत्यङ्मुखः प्रस्तोता ॥ १९ ॥

तत्र प्रस्तोता प्रत्यङ्मुखः पश्चिमाभिमुख उपविशेत् ॥ १९ ॥

उदङ्मुख उद्गाता ॥ २० ॥

प्रस्तोतर्युपविष्टेऽनन्तरमुद्गातोदङ्मुख उत्तराभिमुख उपविशेत् ॥२०॥

पश्चिमेनोद्गातारं गत्वा दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्ता ॥ २१ ॥

उद्गातारमुपविष्टं पश्चिमेन गत्वा प्रतिहर्त्ता दक्षिणपूर्वमष्टमदेशं दिग्भागमीक्षमाणस्तं चाभिमुख उपविशेत् ॥ २१ ॥

सव्याधरानुपस्थान् कृत्वा द्यावापृथिव्योः सन्धिमीक्षमाणः समानि मुखानि धारयन्तः ॥ २२ ॥

सव्योवामः पादोऽधरोऽवनतोयेषु तांस्तथाभूतानुपस्थानुत्सङ्गान् कृत्वा द्यावापृथिव्योः सन्धिमीक्षमाणा मनः समाधानार्थं समानि मुखानि धारयन्तः ( अनम्रमुखाः ) सन्तः आसीरन्नित्युत्तरत्राभिसम्बन्धः ॥ "उपस्थोमेढ्रउत्सङ्गे भगे पायौ च कथ्यते" इति विश्वप्रकाशः ॥ २२ ॥

एवं सर्वस्तोत्रेष्वासीरन् ॥ २३ ॥

योऽयं विधिरुक्तः प्रत्यङ्मुखः प्रस्तोते (१८)त्यारम्य धारयन्त इत्यन्तः नैष बहिष्पवमानमधिकृत्योक्तोऽतः सर्वस्तोत्रेषु एवमेव भवति । कुत एतत्? यस्माद्वक्ष्य"त्येतत्सर्वं कुर्यादुत्तरयोः पवमानयोरि"ति(१।१२।१८) अत आह–सर्वस्तोत्रेष्वासीरन्निति । धन्वी तु "एवमिति प्रत्यङ्मुखत्वादिकमतिदिश्यते । आवृत्तिस्तोत्रेषु तु "नमः सखिभ्य" इति मन्त्रविधानात् "योम आत्मे"ति मन्त्रोनिवर्त्ततइती"त्याह ॥ २३ ॥

अपरेणोद्गातॄंस्त्र्यवराद्ध्या उपगाः ॥ २४ ॥

उद्गातृणामपरे पश्चिमे प्रदेशे । अत्राप्येनबन्तयोगे षष्ठ्यर्थे द्वितीया बोध्या । अवरार्द्ध्यशब्दोनिकृष्टवचनः । अवरस्मिन्नर्धे भवा इत्यर्थे यत्प्र-

---

( १ ) शम्या नाम खननसाधनं लौहमुखं काष्ठम् ॥ खनित्राकृतिर्बाहुमात्री ॥
( २ ) चात्वालपदमिह तत्सन्निकृष्टं लक्षयति योग्यतावशात् ॥

त्ययान्तः ( पा० ४।२।५) । त्रयोऽव राद्धर्या येषु ते । उपगायन्तीत्युपगाः । गमेः कर्त्तरि डः (पा०२।२।४८ वा०) उपगातारः स्युः ॥ सर्वस्तोत्रेष्वित्यनुवर्त्तते । "योऽनुपगीतं समादत्ते मु(१)ष्यते रूक्षो भावुको भवति । उपगातृभ्यः प्रस्वरेत्" इत्युपगानविध्यवगमात् ॥ २४ ॥

चतुरवराद्धर्यानेके ॥ २५ ॥

एके आचार्याश्चतुरवराद्धर्यान्न ततोन्यूनानुपगातॄनाहुः ॥ चतस्रोदिशोभवन्ति "दिग्भिरुपगायन्ति" इति हि ब्राह्मणम् । एवं सति दिश एवोपगायत्र्योभवन्ति । इति । अथ पराद्धर्याः कियन्त ? इति चेदत्र द्राह्यायणीयम् "षड्वा षड्ऋतवः । ऋतवउपगातार इति च ब्राह्मणम् ।" इति । षड्वोपगातारः स्युरेवं सति साक्षादृतव एवोपगातारः कृता भवन्ति इति तदर्थः ॥ २५ ॥

"त एतेनाऽक्षरेणोपगायेयु"हौं" इति (२)मन्द्रस्वरेण सन्ततंसह वाच्येष्वारमन्तः ॥ २६ ॥

यदि त्र्यवराद्धर्या यदि चतुरवराद्धर्या यदि षट्पराद्धर्या स्त एतेनाक्षरेणोपगायेयु'हौं' इति मन्द्रस्वरेण । सन्ततमविच्छिन्नम् । यान्युद्गातॄणां सहवाच्यानि निधनानि तेष्वारमन्तः । विश्रान्ताः सन्तः ॥ २६ ॥

तस्मात्त्र्यन्तरेण स्तुयुः ॥ २७ ॥

तस्मान्मन्द्रात्त्र्यन्तरेण उत्कृष्टेनोद्गातारः स्तुयुः "स्वरे स्वरे सप्त यवान्तराणि" इत्यन्तरपरिमाणं, तस्मात्त्र्यन्तरेण स्तुयुरित्यर्थः ॥ २७ ॥

समेन वा प्रातः सवने ॥ २८ ॥

---

( १ ) एतच्च भाल्लविब्राह्मणम् । योऽनुपगीतं सामगायति स राक्षसादिभिर्मुष्यतेऽपह्रियते । अस्य साम रक्षांसि हरन्तीत्यर्थः ॥ किञ्च रूक्षः शुष्कशरीर उद्गाता स्यात् । उपगानेन साम्नः स्नेहाकरणात् । तस्मादुपगातृभ्यः प्रस्वरेत् । प्रस्वरणं प्रस्वर उपचयः, साम्नां वृद्धिरिति यावत् । उपगातृभ्य इति पञ्चमी । तेभ्यः स्वरवृद्धिं सम्पादयेदित्यर्थः ॥

( २ ) अत्राग्निस्वामिनः । अथ उपगायेयु"हौं"इतीत्येव सिद्धेरेतेनाक्षरेणेति किमर्थमारभ्यते ? उच्यते—सूत्रान्तरमारभते अपिचोपगातॄणां भक्तिमुद्गातार एव कुर्युरिति । एतस्मिन्कल्पेऽपि एतेनैवाक्षरेणेति ॥ अत्र धन्विव्याख्यानं द्राह्यायणीये—ते उपगातारः सर्वेषु स्तोत्रेषु हिङ्कारप्रभृति आस्तोत्रसमाप्ते"हौं" इत्यनेनाक्षरेणाविरतं प्लुतोच्चारणेनोपगायेयुरिति। अत्र द्राह्यायणीये"ओमिति यजमानः"इत्यादिकं दृश्यते। तथैव यजमानोऽपि "ओमि"ति प्रणवेनोपगायेदिति तदर्थः । तत्र"हो" इति परमात्मनः सम्बोधनम् । प्रणवतुल्यमेतत् । उपहूतां "हो" इत्याहात्मानमेवोपह्वयते । आत्माह्युपहूतानां वसिष्ठ" इति तैत्तिरीयके श्रुतेः ॥

उद्गातृस्वरतुल्येन वा स्वरेण मन्द्रेण प्रातः सवने स्तुयुः ॥ २८ ॥

एकान्तरेण वा ॥ २९ ॥

यद्वा एकान्तरेण स्वरेण स्तुयुः ॥ २९ ॥

इति प्रथमस्यैकादशी कण्डिका ॥ १ ॥ ११ ॥ * ॥

## अथ द्वादशी कण्डिका ॥

एवं सर्वस्तोत्रसाधारणमुक्त्वाऽथ प्रकृतमेव बहिष्पवमानं प्रत्याह—

प्रस्तरं प्रतिगृह्य प्रस्तोता "ब्रह्मंस्तोष्यामः प्रशास्तरि" त्युद्गात्रे प्रयच्छेत् ॥ १ ॥

प्रस्तरो (१)दर्भमुष्टिः । उपवेशनानन्तरमध्वर्युस्तं प्रस्तोत्रे प्रयच्छति। "सोमः पवते"इत्यनेन यजुषा । ततोऽध्वर्योः सकाशात्प्रतिगृह्य तं प्रस्तरं प्रस्तोता "ब्रह्मंस्तोष्यामः प्रशास्तः" इत्यनेन यजुषोद्गात्र प्रयच्छेत् ॥ १ ॥

तेन दक्षिणां जङ्घामुपहत्य युञ्ज्यातुस्तोम"मग्ने स्तेजसे"ति ॥२॥

तेनैतेन प्रस्तरेणोद्गाता स्वीयां जङ्घामुपहत्य स्पृष्ट्वा "अग्नेस्तेजसा" इत्येतदादिना यजुषा स्तोमं युञ्ज्यात्। मन्त्रजप एव स्तोमयोगः ॥ मन्त्रो यथा—"ॐ अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्यस्य वर्चसा बृहस्पतिस्त्वा युनक्तु । देवेभ्यः प्राणायाग्निर्युनक्तु । तपसा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियᳬ सत्याः कामा यजमानस्य सन्तु" इति ॥ २ ॥

"अन्नङ्करिष्यामी"ति ॥ ३ ॥

युक्त्वा स्तोममनन्तर—"मन्नङ्करिष्यामी"त्येतदादि यजुर्जपेत् मन्त्रो॰ यथा—ॐ अन्नङ्करिष्याम्यन्नं भविष्याम्यन्नञ्जनयिष्यामि" इति ॥३॥

तूष्णीञ्चात्वालमुदपात्रञ्चावेक्षेरन् ॥ ४ ॥

तूष्णीममन्त्रकम् । सर्व एवोद्गातारस्तूष्णीञ्चात्वालमुदपात्रञ्चावेक्षे॰ रन् पश्येयुः ॥ ४ ॥

"सामासि प्राति मा भाही"त्यादित्यम् ॥ ५ ॥

"सामासी"त्यादियजुषा आदित्यमवेक्षेरन्निति वर्त्तते ॥ ५ ॥

तूष्णीं वा ॥ ६ ॥

---

(१) प्रकृतौष्टौ चतस्रोदर्भमुष्टयश्छिद्यन्ते । प्रथमा मन्त्रैः संस्कृता वेद्यां, जुह्वर्थस्यां निधीयते । विधृतिसंज्ञयोरुदगग्रयोर्दर्भयोरुपरि या च प्रागग्रा स्थापिता भवति सा प्रस्तर इत्युच्यते ॥

यजुषा वा तूष्णीं वेति विकल्पयति ॥ ६ ॥

सकृद्धिङ्कृत्य बहिष्पवमानेन स्तुवीरन् ॥ ७ ॥

स्तोत्रान्तरेषु सर्वेषु बहुकृत्वोहिङ्कारदर्शनाद्बहिष्पवमानेऽपि तच्छङ्का स्यादिति सकृद्वचनम् ॥ ७ ॥

अत्र ब्राह्मणे गायत्रं सामाधिकृत्य"द्विरवनर्द्धेद्धिङ्कुर्य्यात्तृतीयमि"ति सामान्येनोक्तन्तद्विशिनष्टि—

अहिङ्कृता प्रथमा रेतस्या ॥ ८ ॥

प्रथमा स्तोत्रीया अहिङ्कृता स्याद्बहिष्पवमाने । यस्याः सांव्यवहारिकी संज्ञा"रेतस्या" इति । वक्ष्यति हि "रेतस्यैकत्रिकस्य बहिष्पवमानम्' (६।३।४) इति ॥ ८ ॥

हिङ्कृताः पराः ॥ ९ ॥

या रेतस्यायाः परा स्तोत्रीयास्ता हिङ्कृता स्तासु हिङ्कारः स्यादित्यर्थः ॥ ९ ॥

रथन्तरवर्णोत्तमाऽविसृष्टहिङ्कारा ॥ १० ॥

रथन्तरवद्वर्णोयस्याः सेयं रथन्तरवर्णा । सर्वत्र बहिष्पवमानस्योत्तमस्तोत्रीया रथन्तरवर्णा कार्या । अविसृष्टहिङ्कारा च । आकारोविसर्गः । हिङ्कारोन विसृज्यते । आकाररहितः केवलोहिङ्कारोयस्याः सेति तदर्थः । तत्स्वरूपं स्वयमेव गायत्रपटले दर्शयिष्यति ॥ १० ॥

अथ रथन्तरवर्णेति कोऽर्थः ? तं दर्शयति—

तस्या ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेत ॥ ११ ॥

तस्याः । उत्तमायाः । प्रस्तावादूर्ध्वमुद्गीथस्यादितश्चतुरक्षरं रथन्तरवद्धकारैरभिष्टोभेत् ।' तत्प्रकारश्च स्वयमेव दर्शयिष्यति । तथाचायमर्थः । रथन्तरस्येव वर्णचतुष्टयं यस्यास्सा रथन्तरवर्णेति ॥ ११ ॥

"अन्नमकरमि"ति स्तुत्वा जपेत् ॥ १२ ॥

स्तुत्वा "अन्नमकरमि"त्यादि यजुर्जपेदुद्गाता । एकश्रुतिविधानात् ॥ (१)मन्त्रो यथा —"ॐअन्नमकरमन्नमभूदन्नमजीजनम्" इति ॥ १२ ॥

---

(१) अत्रधन्वी "नन्वत्र बहिष्पवमानस्य यच्च यावच्च वक्तव्यं तत्सर्वङ्किमिति तत्सूत्रकारोन ब्रूते ? तत्रोच्यते–ब्राह्मणैरेव सर्वमुक्तं तथाहि "प्रजापतिरकामयत" इत्यारभ्य षष्ठप्रभृतिचतुर्भिरध्यायैः ज्योतिष्टोमस्य स्तोत्राणि सामानि चोक्तानि । तथा त्रिवृद्बहिष्पवमानपञ्चदशान्याज्ज्यानि इत्यहीनब्राह्मणोपक्रमे स्तोमक्लृप्तिरुक्ता । तथा "उपास्मै गायता नर" इत्यारभ्य बहिष्पवमानस्तोत्राणां क्रमेण स्तोत्रीयाः समाम्नाताः । क्रमाल्लिङ्गसाचिवेन ब्राह्मणेन विनियुक्ताश्चेति न किञ्चिद्वक्तव्यं सूत्रकारस्यावशिष्यत" इति ॥

अथ प्रकृतमनुसरामः—

"श्येनोऽसी"ति प्रस्तरे यजमानं वाचयेत् ॥ १३ ॥

प्रस्तरे यजमानं स्पर्शयित्वा "श्येनोऽसी"—त्येतदादि यजुर्वाचयेत् । उद्गाता । "आरब्धप्रस्तरमनुत्वा लभे" इति लिङ्गात् ॥ मन्त्रोयथा- "ॐ श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे स्वस्ति मा सम्पारय मास्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तोवनेमहि भक्षीमहि प्रजामिषम्"इति ॥१३॥

सर्वत्र स्तुत्वोपह्वयेरन् ॥ १४ ॥

तं यजमानं सर्वत्र—सर्वस्तोत्रेषु न केवलं बहिष्पवमाने स्तुत्वोपह्वयेरन् । स्तुत्यनन्तरमनुजानीरन् । "उद्गातार ! उपह्वयध्वम्" इति यजमानेन प्रार्थिते उपहूत इत्युपहवः कार्य इत्यर्थः ॥ १४ ॥

"सर्व्वँर्च्चसे"-तीक्षकान्सहकारिणश्च प्रेक्षमाणोजपेत् ॥ १५ ॥

सहकारिण उद्गातॄन् प्रस्तोतृप्रभृतीनन्यांश्च ईक्षकान् स्तोत्रमोक्षमाणान् प्रेक्षमाणः पश्यन् "सर्व्वँर्च्चसे-त्येतदादि यजुर्जपेत्॥ मन्त्रोयथा–"ॐ सर्व्वँर्च्चसा पयसा सन्तपोभिरगन्महि मनसा सᳬंशिवेन । सर्व्विँज्ञानेन मनसश्च सत्यैर्यथा वोऽहश्चारुतमर्व्वँदानीन्द्रोवोदृशे भूयासᳬंसूर्य्यश्चक्षुषे वातः प्राणाय सोमोगन्धाय ब्रह्म क्षत्राय" इति ॥ १५ ॥

"नमोगन्धर्वाये"त्यादित्यम् ॥ १६ ॥

प्रेक्षमाणोजपेदित्यनुषङ्गः । गन्धर्व आदित्य आम्नायते (शु०य०१८। ३९) ॥ मन्त्रो यथा—"ॐनमोगन्धर्वाय विष्वग् वादिने वर्चोधा असि वर्च्चोमयि धेहि" इति ॥ १६ ॥

देशेनैवान्तर्हितश्चेत् ॥ १७ ॥

चत् यदाऽऽदित्यो मेघादिभिरन्तर्हित आच्छन्नः स्यात् तदा देशेनैव प्रेक्ष्य जपेत् । देशेनेत्युपलक्षणे तृतीया (पा० २।३।२१) ॥ उपलक्षितमिति तदर्थः ॥ १७ ॥

एतत्सर्वं कुर्यादुत्तरयोः पवमानयोः॥ १८ ॥

"मृदाशिथिरा" इति वेदिमाक्रामेयुरि"त्यादिना यदितः पूर्वमुक्तमादित्यप्रेक्षणान्तङ्कर्म्म तदेतत्सर्वमुत्तरयोरपि पवमानयोः कुर्यादित्युत्सर्गः । कः कुर्यादित्यत्राहुरग्निस्वामिनः "वक्ष्यत्ययं यथासवनमुपविश्य प्रस्तोता हविर्द्धानङ्गच्छेदित्यादि ( २।७।६ )। योऽयं हविर्द्धानङ्गच्छेत्स एवे"ति ॥ १८ ॥

अथास्यापवादमाह--

प्रवरास्तु निवर्त्तन्ते चात्वालाऽवेक्षणप्रभृति च प्राग्घिङ्कारात्॥१९॥

"अग्निः प्रस्तोताऽहम्मानुष" इत्येतदादयः प्रवरा निवर्त्तन्तेऽथ तूष्णीं (१) चात्वालमुदपात्रञ्चावेक्षेरन्निति (१-१२-४) एतदादि यत्कर्म तत्सर्वम्बहिष्पवमानस्य हिङ्कारात् प्राक् निवर्त्तते ॥ १९ ॥

प्रवेशनसम्मार्ज्जने चान्तरेण तृतीयसवने ॥ २० ॥

हविर्द्धानप्रवेशनस्य द्रोणकलशसम्मार्जनस्य चोभयोर्मध्यपतितं यत्कर्म तदपि तृतीयसवने निवर्त्तते। चकारात्प्रवराद्य(२)पीति । अत्र "अन्तराऽन्तरेण युक्ते" ( पा० २।३।४ ) इति षष्ठ्यर्थे द्वितीया ॥ २० ॥

कुम्भन्तु तत्र संमृज्यादुत्तरे हविर्द्धाने यः पूर्वोद्रोणकलशाऽऽवृता ॥ २१ ॥

तत्र तृतीयसवने सम्मार्ज्जनवेलायां कुम्भमेव मन्त्रेण संमृज्यात् । न द्रोणकलशम्। तुरेवार्थे। कः पुनः कुम्भः? तमाह उत्तर इति। उत्तरे हविर्द्धाने द्वौ कुम्भौ प्रवृत्तौ तयोर्यः पूर्वः पूर्वदेशे स्थितस्तमिति शेषः । कथमित्याह—द्रोणेति । द्रोणकलशोक्तप्रकारेणेत्यर्थः। आवृत्-परिपाटीत्यसकृदवोचाम ॥ २१ ॥

तम्पूतभृदित्याचक्षते तम्पूतभृदित्याक्षते ॥ २१ ॥

योऽसौ पूर्वस्तंकुम्भं "पूतभृदित्येव"माचक्षतेऽध्वर्यवः। तेन नाम्ना कुम्भवधार्य सम्मृज्यादित्यर्थः। पवित्रवितानमपि तस्यैव मुखे कार्य्यं तदेतत्स्पष्टमुक्तं जैमिनिना "नापूतभृतोमुखे पवित्रं वितनोती"ति। तथाच समाख्यापि तस्योपपद्यते ॥ अत्रान्तेऽभ्यासः प्रपाठक समाप्तिद्योतकः॥२२॥

इति लाट्यायनीयस्य प्रथमप्रपाठकस्य द्वादशी कण्डिका ॥ १ ॥ १२ ॥ *॥

( इति तृतीयः पटलः )

---

इति श्रीमन्मिथिलाभिजनेन करमहाकुलकमलदिवाकरेणकर्म्मकाण्डभूषणेन प्रधानाचार्येण च श्रीमुकुन्दशर्म्मणाकृते लाट्यायनसूत्रभाष्यानुसारि व्याख्याने प्रथमः प्रपाठकः ॥ १ ॥ * ॥

---

( १ ) धन्विदीपेतु—चात्वालोदपात्रयोरादित्यस्य चावेक्षणानि निवर्त्तेरन्निति क्रियानिवृत्तिरुक्ता ॥

( २ ) पूर्वसूत्रोक्तम् ॥

# अथ द्वितीयः प्रपाठकः ॥

### तत्र

### प्रथमा कण्डिका—

**स्तोमयोगे "अग्निर्युनक्तु" इत्येतस्य स्थाने "वायुर्युनक्तु" "सूर्योयुनक्तु" इति नाना सवनयोः ॥ १ ॥**

"एतत्सर्वं कुर्य्यादुत्तरयोः पवमानयो"-( १।१२।१८ )रित्यतिदिष्टं "प्रवरास्तु निवर्त्तन्ते ( १।१२।१९ ) इत्येतदादि यन्निवर्त्तते तदप्युक्तं, साम्प्रतं स्तोमयोगे विशेष उच्यते-स्तोमयोग इति । तन्मन्त्रे "अग्नेस्ते-जसे"त्यादिके "अग्निर्युनक्तु" इत्येतस्य मन्त्रैकदेशस्य स्थाने "वायुर्यु-नक्तु "(१)इति माध्यन्दिने पवमाने "सूर्योयुनक्तु" इत्यार्भवे (२)पवमाने स्यात् । नाना सवनयोरित्युत्तरं सवनद्वयमधिकृत्य तयोः प्रत्यक्षाम्नाना-दित्यर्थः ॥ मन्त्रोयथा--"ॐ वायुर्युनक्तु मनसा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रिय ँ सत्याः कामा यजमानस्य सन्तु" इति । "ओं सूर्यो युनक्तु वाचा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रिय ँ सत्याः का-मा यजमानस्य सन्तु"इति ॥ १ ॥

**विहारन्धानञ्ज(प्यो)य्यो"ऽग्नेस्तेजसा बृहस्पतिस्त्वे"ति प्रात-स्सवने"इन्द्रस्येन्द्रियेण बृहस्पतिस्त्वे"तिमाध्यन्दिने""सूर्यस्ये"ति-तृतीयसवने ॥ २ ॥**

अस्मिन्नेव स्तोमयोजने मन्त्रो यः समस्तास्तिस्रोदेवतास्तासामनु-सवनं विहारं विकृता(३)ङ्क्रियां धानञ्ज(प्यो)य्योमन्यते । तदुच्यते "अग्नेस्तेजसा बृहस्पतिस्त्वा युनक्तु" इति प्रातःसवने । "इन्द्रस्येन्द्रियेण बृहस्पतिस्त्वा युनक्तु" इति माध्यन्दिने सवने "सूर्यस्य वर्च्चसा बृह-स्पतिस्त्वा युनुक्तु" इति तृतीयसवने इति ॥ २ ॥

---

( १ ) अत्र मनसेत्यभिस्वामिभाष्ये ॥

( २ ) अत्र च वाचेति अभिस्वामिभाष्ये । आर्भवपवमानं सायं सवनम् ॥

( ३ ) विहारमित्यस्यायमर्थः । तथा च "अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्यस्य वर्चसा" (पदक्रमसंख्या: १ २ ३ ४ ५ ६) इति षण्णां पदानां विहृत्य ( पृथक्कृत्य ) प्रयोगं धानञ्जप्य आह । तदेव दर्शयत्यग्ने स्तेजसेत्यादिना । प्रतिसवनं द्वे द्वे पदे विभजेरन् बृहस्पतिस्त्वेति प्रत्येकमनुषङ्ग इति वर्त्तुलार्थः ॥

सर्वैरेकैकयँथाम्नायँशाण्डिल्यः ॥ ३ ॥

"अग्नेस्तेजसे"त्यादिभिः सर्वैरपि षड्भिः पदैरविहृतैरेव प्रतिसवनं स्तोमयोगोयथाम्नायं कर्त्तव्यः । यथाम्नायमिति वचनं "बृहस्पतिस्त्वा" इत्यस्यानुषङ्गनिवृत्त्यर्थम् ॥ ३ ॥

साम्ने साम्ने हिङ्कुर्य्युः ॥ ४ ॥

उत्तरयोः पवमानयोः पृथक् पृथक् साम्ने ( तदर्थं ) हिङ्कुर्युः । न बहिष्पवमानवदादौ सकृदेवेत्यर्थः ॥ साम्ने इति पदद्वित्वम् "सवस्य द्वे" "नित्यवीप्सयोः" ( पा० ८।१।१-४ ) इत्यनुशासनात् ॥ वीप्सायामत्र द्विर्भावः । साकल्येन क्रिया सम्बन्धश्च वीप्सा । व्याप्तुमिच्छा ॥४॥

"वृषकोऽसि" "स्वरोऽसी"ति यजमानवाचने ॥ ५ ॥

"श्येनोसी"ति यजमानवाचनस्थाने "वृषकोऽसी" माध्यन्दिने सवने "स्वरोऽसी"ति तृतीयसवने ॥ मन्त्रौयथा "ॐ वृषकोऽसि त्रिष्टुप्छन्दा अनु त्वा रभे स्वस्ति मा सं पारया मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम्" इति १ ॐस्वरोऽसि गयोऽसि जगच्छन्दा अनुत्वा रभे स्वस्ति मा सं पारया मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो· वनेमहि भक्षीमहि प्रजामिषम्" इति २ ॥ ५ ॥

स्तुत्वा बाहिष्पवमानेन प्रस्तरादुभयतश्चतुरङ्गुलम्पारेच्छिद्य तृणं चात्वाले प्रविध्येद् "यदि स्तुतं यदि वाऽद्यसुष्टुतमवाक्स्तुतं यदि वाऽतिष्टुतं यत्तयोरन्योन दिवमारुहेमेममन्योन जयेम लोकमि"ति॥६॥

उत्तरयोः पवमानयोरातिदेशिकोविधिरुक्तः । साम्प्रतं यदनन्तरं प्रकृतं कर्म्म तदुच्यते—स्तुत्वा बहिष्पवमानेनानन्तरं प्रस्तरात्तृणमेकं गृहीत्वा तस्य मूलमग्रञ्च छित्वा मध्यमभागञ्चतुरङ्गुलं कृत्वा चात्वाले नथाभिधे स्थाने प्रविध्येत् प्रक्षिपेत् । "यदि स्तुतमि"त्यादिना यथासूत्रि· तेन मन्त्रेण । एक श्रुतिविधानादुद्गाता । अङ्गुलिच्छेदनसंशये येन कर्म कृतन्तस्य (१)परिमाणमित्यग्निस्वामिनः ॥ ६ ॥

तत्रैवोदपात्रं निनयेयुः "समुद्रं वः प्रहिणोमि स्वां योनिम·

( १ ) "मानक्रिय यामुत्कायामनुक्तेमानकर्त्तरि । "मानकृद्यजमानः स्यादि-"तिका· त्यायनोक्तियुक्तेः ।

भि(१)गच्छतारिष्टास्तन्वो(२)भूयास्म मा परामेचि नोधनम्" ॥ इति ॥ ७ ॥

तत्र—तस्मिन्नेव चात्वाले कर्म्माङ्गभूतमुदपात्रं(३) "समुद्रं वः" इत्यादिना यजुषा निनयेयुः प्रक्षिपेयुः ॥ ७ ॥

बहिर्वेद्युदञ्चोऽयुञ्जि पदान्युत्क्रामेयुः प्राग्दशभ्यः ॥ ८ ॥

तदुदपात्रं निनीय उत्थाय बहिर्वेद्युदञ्च उदङ्मुखा अयुञ्जि अयुग्मानि पदानि ( त्रीणि पञ्च सप्त नव वा न ततः परम् ) प्रागृदशभ्य उत्क्रामेयु रुत्थाप्य क्षिपेयुः ॥ ८ ॥

आव्रज्याग्नीध्रीयं बहिष्पवमानर्चोऽधीयीरन् ॥९॥

प्रदक्षिणमावृत्त्याऽऽग्नीध्रीयमग्निमाव्रज्य गत्वा तस्य पश्चादुपविश्य बहिष्पवमानर्चोऽधीयीरन् जपेयुरित्यर्थः ॥ ९ ॥

"अनुव्याहा(४)रिषीन्मामि"ति यमतिशङ्केत तस्मा आग्नी· ध्रीय आहुतिवज्रं प्रहरेत् । "यद्यशतश्च त उप च ते नमश्चते सत्योऽसि सत्यसंस्कृतस्तस्य ते यऊनं योऽकृतयँयोऽतिरिक्तमदर्शत्तस्य प्राणेनाऽप्यायस्व स्वाहा" इति ॥ १० ॥

उद्गातुर्न्यूनातिरिक्तकरणदोषोद्भावनेनाक्षेपोक्तिरनुव्याहारः "य ऊनं· योऽतिरिक्तमदर्शत्" इति मन्त्रलिङ्गात् । अनुव्याहारिषीत् आक्षिप्त· वानयं मामिति यङ्कमप्यृत्विजमतिशङ्केत मन्येत । तमुद्दिश्याग्नीध्रीये धि· ष्ण्ये—( तत्स्थेऽग्नौ ) आहुतिव(५)ज्रं प्रहरेत् । "यद्यशतश्चत" इत्या· दिना यजुषा ॥ १० ॥

न व्यभिचरेदिति धानञ्जाप्यः ( य्यः) ॥ ११ ॥

विशिष्टोऽभिचार एव (६)व्यभिचारः । य एष आहुतिवज्रप्रहारस्तं न कुर्यात् । यतः "य एनमनुव्याहरति स आर्त्तिमार्च्छति" इतिश्रुतेः । स्वयमेव नश्यतः किमभिचारेणेति श्रुत्याशयः ॥ ११ ॥

इति द्वितीयस्य प्रथमा कण्डिका ॥ २ ॥ १ ॥*॥

---

( १ ) "अपिगच्छत" इति द्राह्यायणीये मुद्रितपुस्तके पाठः ॥

( २ ) "तन्वा" इति द्रा० मु० पु० पाठः ॥ ( ३ ) पात्रस्थमुदकम् ॥

( ४ ) "व्याहार्षीत्" इति द्राह्यायणीये मु—पु० पाठः ॥ एषच प्रातिशाख्यानु· सारी पाठः ॥ ( ५ ) वज्रं प्रहरन्निवाहुतिञ्जुहुयादित्यर्थः । अत्रत्वार्ष एवेट् कृतः ॥

( ६ ) आभिचारो विनाशोपायचिन्तनम् ॥

## अथ द्वितीयकण्डिका—

**अहीनबहिष्पवमानैः सदसि स्तुवीरन्प्रथमादह्नोऽन्यत्र ॥ १ ॥**

अहीनपवमानस्य कृत्स्नोविधिरुक्तः। साम्प्रतमहीनसत्रेषु देशविशेषो-विवक्षितः स उच्यते-अहीनबहिष्पमानैरिति। द्विरात्रप्रभृत्यहीनस्य स-त्रस्य सम्बन्धीनि यानि बहिष्पवमानानि तैः प्रथमादह्नोऽन्यत्र सदसि सदोदेशे स्तुवीरन्। प्रथमेऽहनि तु चात्वालदेश इत्यर्थः ॥ १ ॥

**आद्यन्तयोश्च सत्रेपु ॥ २ ॥**

आद्यन्तयोरिति पञ्चम्यर्थे(१) सप्तमी। अन्यत्रेत्यनुवर्त्तते। सदसीति च। सत्रेषु आद्यन्ताभ्यामहोभ्यामन्यत्र सदस्येव बहिष्पवमानस्तुतिरि-त्यर्थश्चोऽत्रा त्वर्थे ॥ २ ॥

**प्राग्धिष्ण्यविहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः ॥ ३ ॥**

यदा सदसि बहिष्पवमानस्तदा स्तुत्यनन्तरन्धिष्ण्येष्वग्नीनां विह-रणात् प्रागेव सदसानिष्क्रम्य चात्वाले तृणप्रासनप्रभृति ऋग्जपान्तं कु-र्युरित्यर्थः ॥ ३ ॥

**वेदत्रिरात्रे सत्रन्यायं गौतमः ॥ ४ ॥**

"त्रयस्त्रिवृतोऽतिरात्राः"इति वेदत्रिरात्रस्य क्लृप्तिः। तस्योभयतो-ऽतिरात्रत्वात्। सत्राणाञ्च तथाविधत्वात्सत्रन्यायः स्यात्तेना—"द्यन्त योस्तु सत्रेषु"इति वर्त्ततेइति गौतमोयमतम् ॥ ४ ॥

**अहीनन्यायं धानञ्जप्यः (य्यः) ॥ ५ ॥**

अहीनेषु योन्यायस्तं धानञ्जप्योमन्यते ॥ ५ ॥

**मन्द्रं प्रातस्सवने स्तुवीरन्नुत्तरोत्तर्युत्तरयोः ॥ ६ ॥**

मन्द्र-मध्यम-क्रुष्टानीति त्रीणि वाचः स्थानानि। तेषां प्रथमेन प्रातः सवने स्तुतिः कार्या। उत्तरयोः सवनयोरुत्तरोत्तरि। उत्तरो(२)त्तर-

---

(१) अत्र धन्वी। कुतएवं व्याख्यायते? गवामयने विषुवति बहिष्पवमानस्य पर-मतेन चात्वालदेशे स्तवनविधानात्स्वमतेन सदसि स्तवनमिति गम्यते। यथोक्तं "बहि-रस्यैके बहिष्पवमानेन स्तूयते" इति तेन पञ्चम्यर्थे सप्तमीनिर्णय इति ॥

(२) उत्तरोत्तरि-इति मत्वर्थेन्यन्तन्तेन तद्वत्वमुच्यते। क्रियाविशेषणमेतत्। अत्र-स्वामिनः। मन्द्रस्वरं श्रित्वा प्रातः सवने स्तुवीरन् उत्तरमुत्तर श्रित्वोत्तरयोः सवनयोः स्तुवीरन् मन्द्रे सप्तयवान्तराणि भवन्ति अतः श्रित्वेत्युक्तम्। अन्यथा हि मन्द्रेण प्रातः सवने स्तुवीरन्निति स्यादित्याहुः ॥

स्वरयुक्तं स्तवनं कार्यमित्यर्थः ॥ अत्रमन्द्रमिति क्रियाविशेषणमिति— द्वितीया ॥ क्रियाविशेष(१)णानाङ्कर्मत्वस्यानुशासनिकत्वात् ॥ ६ ॥

मध्येन वोभयोः ॥ ७ ॥

मध्येन वा स्वरेण उभयोरुत्तरयोः सवनयोः स्तुवीरन् ॥ ७ ॥

एतस्यां वेलायां प्राश्नीयुः ॥ ८ ॥

रागप्राप्तप्रातरशनस्यायं कालनियमः । तेनातिरात्रे सायमशने न कालनियमः । केचित्त्वा तृतीयसवनसमाप्तेरतः परं न भाक्तव्यमित्या(२)हुः ॥ ८ ॥

अनुसवनं तु सत्रेषु सवनमुखीयान्भक्षयित्वा सत्रेषु नाराशंसेषु ॥ ९ ॥

सत्रेषु अनुसवनं सवनान्ते भोजनम् । तत्कालमाह—सवनमुखीयान् भक्षयित्वेति । नाराशंसेषु द्वितीयाश्चमसाः (३)सवनेषु त्रिष्वपि नाराशंससंज्ञकास्तेषु सादितेषु सत्सु ॥ ९ ॥

वपायां हुतायां धिष्ण्यानुपातिष्ठेरन् ॥ १० ॥

सवनीयस्य पशोर्वपायां हुतायां धिष्ण्यानुपतिष्ठेरन् धिष्ण्योपस्थानङ्कार्यमित्यर्थः । तदेतद्वक्ष्यत्यनुपदम् (२।२।१६) धिष्ण्यशब्दः स्थानगृहनक्षत्राग्निवाचकः कोशेषु पठ्यते । तद्यथा "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमरः । "धिष्ण्यं स्थानाग्निसद्मसु" इति मेदिनी च । तत्र धिष्ण्यमिति नपुंसकनिर्देशः सामान्याभिप्रायः । तत्र हि नपुंसकमेवानुशिष्यते (पा. २।४।१७ वा०) तेनार्थविशेषपरत्वे पुंलिङ्गताऽपि । अग्नीनामाश्रयभूता मृदा निर्मिताः स्वल्पवेदिका धिष्ण्यान्युच्यन्ते । (का. ८।६।१६) तानि षोडश ॥ १० ॥

चात्वाले तु मार्ज्जनं पूर्वसत्रेषु ।

"इदमापः प्रवहत अवद्यञ्च मलञ्चयत् ।

---

(१) अभेदेने क्रियाफलविशेषणानां व्यपदेशिवद्भावेन फलाश्रयत्वात् । अतएव तृतीययाऽभेदार्थिकया प्रकृत्यादि (पा० २।३।१८) विहितयाऽत्र व्याख्यानमुपपद्यतेऽग्रे च तृतीयैव । एवं लिङ्गसामान्यनपुंसकत्वमप्येषां (क्रियाविशेषणानाम्) भवतीत्यपि बोध्यम् ॥

(२) अत्राग्निस्वामिनस्तु-स्तुत्वा बहिष्पवमानेनर्त्विजाम्भोजनकाल उपदिश्यते । एतस्मिन्काले भुञ्जीरन् नान्तरा भोजनं स्यात् आदधिभक्षणादित्येवं व्याचख्युः ॥

(३) तथाच वक्ष्यते "द्वितीयाः सवनेषु नाराशंसाः पूर्वयोश्च तृतीयौ" (२। ५।१३) इति ॥

यच्चाभिदुद्रोहानृतं, यच्च शेपे अभीरुणम् ॥
आपोमा तस्मादेनसो दुरितात्पान्तु विश्वतः" ।
"निर्म्मामुञ्चामि शपथा," न्निर्म्मा वरुणादुत ।
निर्म्मा यमस्य पड्विशा, त्सर्वस्मादेव किल्विषात्" ॥

"सुमित्रियान आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु यो, ऽस्मान्द्वेष्टि यं च वयं द्विष्म" इति ॥ ११ ॥

सत्रेषु तु धिष्ण्योपस्थानात्पूर्वञ्चात्वाले मन्त्रपूताभिरद्भिर्मार्ज्जनम् "इदमापः" इत्येदभ्युक्षणम्भवति ॥ ११ ॥

प्रकृतमधुनोच्यते—

"सम्राडसी"—त्याहवनीयमुपस्थायोदञ्चोगत्वाऽऽस्तावचात्वालशामित्रानुदङ्मुखाः "तुथः" "नभः" "असम्मृष्टः"इति ॥१२॥

उत्तरवेदेः पश्चात्स्थित्वा "ॐ सम्राडसि कृशानुः" इत्युत्तरवेदिकमाहवनीयमुपस्थायोदङ्मुखा गत्वा बहिष्पवमानदेशे तिष्ठन्तः । उदङ्मुखा आस्तावदेशं चात्वालं शामित्रञ्च "तुथः""नभः" "असम्मृष्टः" इत्येतदादिभिर्मन्त्रैर्यथाक्रममुपतिष्ठेरन्। मन्त्रायथा–"ॐ तुथोऽसिजनधायः" "ॐ नभोऽसिप्रतक्वा" "ॐ असम्मृष्टोऽसि हव्यसूदनः"इति ॥ १२ ॥

"विभुरसी" त्याग्नीध्रीयमुपतिष्ठेरन् ॥ १३ ॥

अग्निमिन्धेऽग्नीत् । तस्य स्थानमाग्नीध्रम् । "अग्नीधः शरणे (२)रण् भञ्च" (पा॰ ४।३।१२० वा.) इति रणन्तः । तत्र भव आग्नीध्रीयोऽग्निः । तं धिष्ण्यं तत्स्थमग्निं "विभुरसि प्रवाहण"इति मन्त्रेणोपतिष्ठेरन् । अनादेशात्प्राङ्मुखा(२)एव (१।२।१६) ॥ १३ ॥

तमुत्तरेण सञ्चरः सर्वत्र॥ १४ ॥

तमि"त्येनपा द्वितीया" (पा. २।३।३१) इति षष्ठ्यर्थे द्वितीया। तस्य आग्नीध्रीयस्याग्नेरुत्तरेणैव सञ्चरोगमनागमने (३)सर्वैः कार्यः । न केवलं धिष्ण्योपस्थान एवेत्याह–सर्वत्रेति ॥ १४ ॥

दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्द्धानमाहवनीयञ्च पृष्ठहोमाय १५

---

(१) "स्तुथः" इति कलिकातामुद्रितेऽपपाठः ॥

(२) शरणं गृह स्थानमित्यनर्थान्तरम् । "शरणं गृहरक्षित्रोरि"ति चामरः ॥

(३) एतद्बोधनार्थैवोपतिष्ठेरन्निति पुनर्वचनमन्यथोदङ्मुखतैव यथापूर्वमाम्नातेह्यापि बुध्येतेत्यग्निस्वामिनः प्राहुः ॥

(४) प्राक् च प्रत्यक् चापि गच्छद्भिरित्यर्थः ॥

उत्तरयोः सवनयोर्यस्मिन्काले हविर्द्धानं प्रविशति ग्रावयोजनादि कार्यार्थम् । यदा च पृष्ठहोमार्थं प्रस्तोता(१)ऽऽहवनीयं गच्छति । तदा दक्षिणेनाग्नीध्रीयं सञ्चरः कार्यः । ततोऽन्यत्र सर्वत्रोत्तरणैवेति । पृष्ठहोमायेति विशेषणं प्रायश्चित्तहोमेषुनिवृत्त्यर्थम् ॥ १५ ॥

पूर्वस्यां सदसोद्वारि प्रत्यङ्मुखास्तिष्ठन्तो "वह्निरि"ति होतुर्धिष्ण्यम् ॥ १६ ॥

उपतिष्ठेरन्नित्यनुवर्त्तते । सदसः पूर्वस्यां द्वारि प्रत्यङ्मुखास्तिष्ठन्तः "ॐ वह्नि रसि हव्यवाहनः" इति यजुषा होतुर्धिष्ण्यमुपतिष्ठेरन् ॥१६॥

"श्वात्र" इतिमैत्रावरुणस्य ॥ १७ ॥

धिष्ण्यमुपतिष्ठेरन् । सदसोद्वार्येव तिष्ठन्तः । मन्त्रो यथा—"ॐ श्वात्रोऽसि प्रचेताः" इति ॥ १७ ॥

"तुथः" "उशिक्" "अङ्घारिः" "अवस्युः" इति ब्राह्मणाच्छंशि प्रभृतीनामुदञ्चः ॥ १८ ॥

"तुथः" इत्यादि मन्त्रचतुष्टयस्य प्रतीकोपादानं ब्राह्मणाच्छसि(२)पोतृ नेष्ट्रऽच्छावाकानाञ्चतुर्णां धिष्ण्यांश्चतुर्भिर्मन्त्रैस्तत्रैव तिष्ठन्त उदञ्चः उदङ्मुखा उपतिष्ठेरन्नित्यर्थः ॥ मन्त्रा यथा "ॐतुथोऽसि विश्ववेदाः" "ॐ उशिगसि कविः"। "ॐ अङ्घारिरसि बम्भारिः" "ॐ अवस्यु रसि दुवस्वान्" इति ॥ १८ ॥

तत्रैव तिष्ठन्तः "शुन्ध्युरिति मार्जालीयम् ॥ १९ ॥

तत्रैव सदसोद्वारि तिष्ठन्तो दक्षिणा मुखाः 'ॐ शुन्ध्युरसि मार्ज्जालीयः"—इति यजुषा मार्जालीयं धिष्ण्यमुपतिष्ठेरन् ॥ १९ ॥

"ऋतधामे"त्यौदुम्बरीम् ॥ २० ॥

सदसोद्वार्येव तिष्ठन्तः प्रत्यङ्मुखाः "ॐऋतधामासि स्वर्ज्योतिरि" ति यजुषौदुम्बरीधिष्ण्यमुपतिष्ठेरन् ॥ २० ॥

"समुद्र" इति ब्रह्मणः सदनम् ॥ २१ ॥

द्वार्येव तिष्ठन्तः "ॐ समुद्रोऽसिविश्वव्यचाः" इत्यनेन यजुषा

---

( १ ) अत्राग्निस्वामिनः आहवनीयग्रहणादन्योऽपि पृष्ठाश्रितोहोम आहवनीय एव स्यात् । यथा वैराजमितीत्याहुः ॥

( २ ) उपसंख्यानादयं ( पा० ६।३.२ वा० ) साधुः । ब्राह्मणे विहितानि शस्त्राणि उपचाराद्ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः । द्वितियार्थे पञ्चमी तस्याश्चालुगुपसंख्यानादेव ॥

ब्रह्मणः सदन—( ब्रह्मसदनधिष्ण्य ) मुपतिष्ठेरन् ॥ २१ ॥

उत्तरेण सदोगत्वाऽन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तो"ऽहिरि"ति प्राजहितम् ॥ २२ ॥

ब्रह्मसदनोपस्थानानन्तरं सदस उत्तरेण गत्वा सदसः पश्चादन्तर्वेदि वेदिमध्ये प्रत्यङ्मुखास्तिष्ठन्तः "ॐअहिरसि बुध्न्य" इति यजुषा प्राजहितं पुराणम्(१) आहवनीयधिष्ण्यमुपतिष्ठेरन् ॥ २२ ॥

"अजः" इतिगार्हपत्यम् ॥ २३ ॥

" ओं अजोऽस्येकपात्"—इत्यनेन यजुषा यस्मादौत्तरवेदिक(२)-मग्निं प्रणयन्ति तं गार्हपत्यमुपतिष्ठेरन् ॥ २३ ॥

"सगरा" इति दक्षिणाग्नेरायतनम् ॥ २४ ॥

"ॐ सगरा असि बुध्न्यः" इति मन्त्रस्वरूपम् । स्पष्टमन्यत् ॥ २४ ॥

"कव्या" इति दाक्षिणं वेद्यन्तम् ॥ २५ ॥

दक्षिणमहावेदिपार्श्वन्दक्षिणामुखाः "ॐ कव्योऽसि कव्यवाहनः" इति यजुषोपतिष्ठेरन् ॥ २५ ॥

तत्रैव तिष्ठन्तः सर्वान्समन्वीक्षमाणाः "पातमेति" ॥२६॥

तत्रैव तस्मिन्नेव देशे तिष्ठन्तः सर्वानेवोपस्थितान्धिष्ण्यान्पुनः समन्वीक्षमाणाः "पातमा" इत्येतद्यजुः संहत्योपतिष्ठेरन् ॥ मन्त्रोयथा– "ओं पातमाऽग्नयोरौद्रेणानीकेन पिपृत मा नमोवोऽस्तु मा माहिंसिष्ट" इति ॥ २६ ॥

एकैकमुपस्थायैतद्ब्रूयुरिति शाण्डिल्योबहुशब्दानेकवत्कुर्वन्ति॥२७॥

आहवनीयादारभ्यैकैकं धिष्ण्यमुपस्थाय तदानीमेव तं तं समन्वीक्षमाणाः एतत् "पातमा"इति मन्त्रं ब्रूयुर्न सर्वोपस्थानान्त इति शाण्डिल्य आचार्योमन्यते ॥ ननु च प्रत्येकं "पातमा" इत्युपस्थाने बहुवचनविरोधः स्यादत आह—बहुइति । बहुवचनान्येकवत्कुर्वन्त इत्यर्थः, तद्यथा "सम्राडसि कृशानुः" इत्युक्त्वा "पाहि माऽग्ने रौद्रेणानीकेन पिपृहि मा नमस्ते अस्तु मा मा हिंसीः"इति ॥ २७ ॥

इति द्वितीयस्य द्वितीया कण्डिका ॥२॥२॥*॥

---

( १ ) एतद्यथाधन्विव्यानं लिखितं, केवलं गार्हपत्यमित्यस्य स्थान आहवनीयमिति । तथाच अग्निस्वामिभाष्यम् "पात्नीशालोऽग्निः केषाञ्चिद्गार्हपत्यादातिप्रणयनोभवति। केषाञ्चिदाहवनीयात् । यस्मादातिप्रणयनो भवति स गार्हपत्यः । योऽन्यः स प्राजहित"इति।

( २ ) पात्नी शालम् ॥

## अथ द्वितीयस्य तृतीया ।

अथ शाखान्तरीयमुपस्थानन्दर्शयति—

रौरुकीणि चेत्कुर्युरादित्यं प्रथममुपतिष्ठेरन् "अध्वनाम्" इति ॥१॥

रौरुकिणोनाम केचिच्छाखिनः। तैरधीतानि यजूंषि रौरुकीणि। तानि यदि कुर्युस्तदा प्रथमम्(१) "अध्वनामध्वपते स्वस्ति मेऽद्याऽस्मिन्देवयजने पथि]भूयात्" इत्यनेन मन्त्रेणादित्यमुपतिष्ठेरन् ॥ १ ॥

आहवनीयमुपस्थाय तमेव "अपिजोऽसि जायमानः" इति । "अपिजोऽसि नवजात" इति वा यमग्निमनुप्रहरन्ति तमभिप्रेत्य ॥ २॥

"सम्राडसि" इत्याहवनीयमुपस्थाय तमेव पुनः "अपि जोऽसी"त्येवमादिद्वयोर्मन्त्रयोरन्यतरेणोपतिष्ठेरन् । किमर्थं पुनरुपस्थानमिति चेत्तत्राह—यमग्निमिति । यमग्निं मथित्वाऽऽहवनीये प्रहरन्त्यध्वर्यवस्तमभिप्रेत्य पुनरुपस्थानम् । यद्यप्ययमग्निः पृथग्नोपलभ्यते तथापि तद्बुध्योपस्थानङ्कार्यम् । तदुक्तमभिप्रेत्येति ॥ २ ॥

यदा चात्वालमथोत्करं "तुमुलोऽस्याक्रन्दकृत्वा" इति ॥ ३ ॥

यदा—यस्मिन्काले चात्वालमुपतिष्ठेरन् । अथ अनन्तरमुत्करमुपतिष्ठेरन् "तुमुलोऽस्याक्रन्दकृत्वे"त्यनेन यजुषा ॥ ३ ॥

यदा शामित्रमथ यत्रोबध्यन्निखन"न्त्यूबध्यगोहोऽसि पार्थिव"इति ॥ ४ ॥

यदा—यस्मिन्काले शामित्रमुपतिष्ठेरन् । अथ अनन्तरं यत्र यस्मिन्प्रदेशे पशोरूबध्यं शकृत् निखनन्ति तं देशमुपतिष्ठेरन् (२)"ऊबध्यगोहोऽसि पार्थिव" इत्यनेन यजुषा ॥ ४ ॥

यदाऽऽग्नीध्रीयमथ यत्राच्छावाक आसीनो होतर्युपहवमिच्छ"त्युपहव्योऽसि नमस्य"इत्यु—"पहव्योऽसि तनूपा"इति वा ॥ ५ ॥

यदा—यस्मिन्काले आग्नीध्रीयमुपतिष्ठेरन् । अथानन्तरं यत्र यस्मिन्देशे अच्छावाक आसीनः होतरि ( विषये ) उपहवमनुज्ञामिच्छति तन्देशमुपतिष्ठेरन् "उपहव्योऽसी"त्येवमादि द्वयोर्मन्त्रयोरन्यतरेण ॥५॥

यदा ब्रह्मणः सदनमथ सदस्यस्य "सदस्योऽसि मलि-

---

( १ ) प्रागाहवनीयोपस्थानात् ॥

( २ ) ऊबध्यं पशुशकृद् गूह्यते संव्रियते यस्मिन्प्रदेशेऽसावूबध्यगोहः । "गुहूसंवरणे" ( भ्वा० उ० ) अधिकरणे घञ् । ( पा० ३।३।११७ ) ॥

म्लुच" इति ॥ ६ ॥

यदा—यस्मिन्काले ब्रह्मणः सदनमुपतिष्ठेरन् । अथानन्तरं सदस्यस्य (१)सदनमुपस्थेयं "सदस्योऽसि मलिम्लुच" इत्यनेन मन्त्रेण ॥ ६ ॥

यदा दक्षिणं वेद्यन्तमथ "प्राजापत्यमसी"ति पत्नीशालाम्—"ऐन्द्रमसी"ति सदो "वैष्णवमसी"ति हविर्धानम् । "ऐन्द्राग्नमसी"त्याग्नीध्रीयं "वैश्वदेवमसी"ति वा ॥ ७ ॥

यदा—यस्मिन्काले दक्षिणं वेद्यन्तमुपतिष्ठेरन् । अथानन्तरम्पत्नीशालादीन्याग्नीध्रीयान्तानि चत्वार्यगाराणि उपतिष्ठेरन्यथादिष्टैश्चतुर्भिर्मन्त्रैः । यद्यप्याग्नीध्रीयस्योपस्थानमुक्तमेव तथापि पत्नीशालादिभिः परिश्रितस्य ( मिलितस्य ) तस्योपस्थानमिहादृष्टविशेषार्थमुच्यते ॥ ७ ॥

अथ तथैव समस्तेन "सर्वे स्थ सोम्यासः सर्वे सोमं पिबत सर्वे सोमस्य पीतिमानशध्वे" "पातमे"ति समानं परम् ॥ ८ ॥

अथास्मात्कर्मणोऽनन्तरं यथापूर्वं समस्तोपस्थानं कृतं तथैव तेनैव प्रकारेण सर्वान्समीक्षमाणः "सर्वेस्थ" इत्येतदादि "मानशध्वे"इत्यन्तं यजुर्जपित्वा "पातमाग्नयोरौद्रेणानीकेने"ति मन्त्रशेषोऽस्माकं रौरुकिणाञ्च समान इत्यर्थः ॥ ८ ॥

एवं शाखान्तरीयमुपस्थानमुक्त्वा तदनन्तरं कर्मोच्यते—

"ऋतस्य द्वारौ स्थ"इत्यपरौ (२)द्वारबाहू सम्मृज्य "मा मा सन्ताप्तम्" इति (३)प्रविशेयुः ॥ ९ ॥

द्वयोर्विधानयोरन्यतरेण धिष्ण्यानुपस्थायानन्तरम् "ऋतस्य द्वारौ स्थ" इत्यनेन मन्त्रेण सदसः अपरौ पश्चिमौ द्वारबाहू संमृज्य "मा मा सन्ताप्तम्" इत्यनेन यजुषा सदः प्रविशेयुः । सम्मार्ज्जनं शोधनम् ॥ ९ ॥

दक्षिणेनौदुम्बरीं गत्वा तस्या उत्तरत उपविशेयु"र्नमः सखिभ्य" इति ॥ १० ॥

औदुम्बर्या दक्षिणेन प्रदेशेन गत्वा तस्या औदुम्बर्या उत्तरे प्रदेशे उपविशेयुः "ॐ नमः सखिभ्य· पूर्वसद्भ्यो न मोऽपरसद्भ्यः" इत्यनेन यजुषा । तस्या इति निर्देशोमाभूत्सदस उत्तरत इति ॥ १० ॥

---

( १ ) सीदन्त्यस्मिन्निति सदनमधिकरणे ल्युट् । ( पा० ३।३।११७ ) ॥

( २ ) अत्र सदस इति द्राह्यायणीयेऽधिकः पाठः ॥

( ३ ) अत्र सद इति द्रा० अ० पाठः ।

पूर्वेण प्रस्तोतारं प्रतिहर्त्ता गच्छेदेत(१)स्याम् ॥ ११ ॥

एतस्यान्धिष्ण्योपस्थानानन्तरायां वेलायाम् । यदा दक्षिणेनौदुम्बरीं गत्वोपवेशनार्थमुदङ्मुखा गच्छन्ति तदा प्रतिहर्त्ता उद्गातुः सव्यं पार्श्वं परित्यज्य प्रस्तोतुर्दक्षिणपार्श्वस्थ उदङ्मुखोगच्छेदित्यर्थः ॥ ११ ॥

एतस्यां वेलायाᳪं समुपह्वयेरन् ॥ १२ ॥

उपह्वानमनुज्ञानम् । एतस्यां वेलायामुपवेशनकाले । समुपह्वयेरन् अन्योऽन्यमनुजानीरन् । "उपहूत" इत्येवमनुज्ञाप्रदानमुक्तम् । अनुज्ञानस्य च प्रार्थनापूर्वकत्वात् "यजमाना उपह्वयध्वम्" इति प्रार्थनमर्थसिद्धम्॥१२॥

(२)के कुत्रेत्यपेक्षायामाह—

सर्वैसत्रेषु ॥ १३ ॥

सत्रेषु सर्वे यजमानाः समुपह्वयेरन् ॥ १३ ॥

मिथोऽन्यत्र ॥ १४ ॥

सत्रादन्यत्र मिथोऽन्योन्यं द्वा द्वौ कृत्वा समुपह्वयेरन् ॥ अत्र धन्वी— सत्रेभ्योऽन्यत्र उद्गातणां मिथ एवोपह्वानं कार्यन्नान्येषामध्वर्य्वादीनाम् । तत्रोद्गाता प्रथममितरावनुजानीयात् । ततः प्रस्तोतेतरौ । ततः प्रतिहर्त्ते-तराविति ॥ १४ ॥

सर्वे यजमानम् ॥ १५ ॥

सत्रादन्यत्र सर्वे त्रयोऽप्युद्गातारः । यजमानमुपह्वयेरन । "उद्गातार उ-पह्वयध्वम्" इति यजमानेन प्रार्थिता. सर्वे "उपहूतः" इत्यनुज्ञां कुर्युः ॥१५॥

द्वारबाहुसम्माज्र्जनप्रभृत्येतत्सर्वं कुर्युर्यदा धिष्ण्यानुपतिष्ठेरन् ॥१६॥

यदा यदा धिष्ण्योपस्थानमुत्तरयोः क्रियते तदा तदा सर्वत्र तदनन्तरं द्वार(३)बाहुसम्माज्र्जनप्रभृत्येतत्सर्वमुपह्वानान्तं कर्म कुर्युरित्यर्थः ॥ १६ ॥

अथोद्गातुरार्त्विज्यस(४)मासे प्रकारं वक्तुमाह—

यजमानब्रह्मत्वे चेदुद्गाता कुर्यादाग्नीध्रीयमुपस्थाय पूर्वेण परिक्रामेत् ॥ १७ ॥

रोगादिना ब्रह्मयजमानयोः स्वकार्याशक्तौ तत्कर्म कर्त्तुमुद्गाता यदी

---

( १ ) अत्रैतस्यामित्यधिकं प्रतिभाति । द्राह्यायणीयेऽदर्शनात् । उत्तरत्र एतस्या-मिति काकाक्षि ( गोलक-) न्यायेनोभयत्र संबध्यत इत्यग्निस्वामिभाष्याच्च ॥

( २ ) द्राह्यायणीये तु–सर्वे सत्रेषु इति पूर्वत्रैव पठ्यते । युज्यत चैतदाकाङ्क्षापूर्त्यै ॥

( ३ ) "ऋतस्य द्वारौ स्थ" ( २।३।९ ) इत्येतदादिनोक्तपूर्वम् ॥

( ४ ) समसनं समासः संक्षेपोयुगपत्करणमिति यावत् ॥

च्छे(१)त् तदाऽऽग्नीध्रीयमुपस्थाय तस्य पूर्वेण परिक्रामेत् प्रदक्षिण-मित्यर्थः ॥ १७ ॥

सादसानुपस्थाय तत एवेक्षमाणः पात्नीशालान् ॥ १८ ॥

सादसान् सदसि भवान्धिष्ण्यान् होत्रीयप्रभृतीन् ब्रह्मसदनपर्यन्तान् उपस्थाय तत एव सदसोद्वार्येव तिष्ठन्नीक्षमाणः पात्नीशाला(२)-न्प्राग्वंशगतान् धिष्ण्यानुपतिष्ठेतेति । पात्नीशालापदेन दक्षिणवेद्यन्तोऽपि गृह्यते ॥ १८ ॥

इतरथेतरौ ॥ १९ ॥

इतरौ प्रस्तोता प्रतिहर्त्ता च । इतरथा पूर्वोक्तेना"न्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्त" इत्यनेन प्रकारेण पात्नीशालानुपतिष्ठेयातामित्यर्थः ॥१९॥

इति द्वितीयस्य तृतीया कण्डिका ॥ २ ॥ ३ ॥ * ॥

## अथ चतुर्थी कण्डिका—

"ऋतस्य द्वारौ स्थ" इति पूर्वौ (३)द्वारबाहूसम्मृज्य दक्षिणस्य पुरस्तादुदङ्मुख उपविशेदिति धानञ्जप्यः(य्यः) ॥ १ ॥

सादसान्पात्नीशालांश्च धिष्ण्यानुपस्थायानन्तरम् ॐ ऋतस्य द्वारौ स्थोमा मा सन्तासम्" इत्यनेन यजुषा पूर्वौ द्वारबाहू सम्मृज्य दक्षिणस्य द्वारबाहोः पुरस्तात्पूर्वप्रदेशे सदसोरुदङ्मुख उपविशेदित्येवं धानञ्जप्य(य्य) आचार्य आह ॥ १ ॥

पश्चात्प्रत्यङ्मुख इति शाण्डिल्यः ॥ २ ॥

तस्यैव दक्षिणस्य द्वारबाहोः पश्चात्पश्चिमे प्रदेशेऽन्तः सदसि प्रत्यङ्मुख उपविशेत् इत्येवं शाण्डिल्य आचार्य आह । तदिदमुपवेशनं याजमानमुक्तमिति वेदितव्यम् ॥ २ ॥

---

( १ ) दक्षिणाभिः परिक्रीतः । अत एवानुवादाज्ज्ञायते ऋत्विजामेकस्य कर्माशक्तौ इतरस्तत्कर्म कुर्यादिति ॥

( २ ) पत्नीशालायाम्भवान् । प्राग्वंशोहविर्गेहात्पूर्वदेशे सदस्यादीनां गृहम् । यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं दीर्घकाष्ठं प्राग्वंश इति क्वचित्पठ्यते । सदस्याश्च यज्ञकर्मणि वेदोक्तक्रियाकलापं ये पश्यन्ति ते । तथाचामरः "प्राग्वंशः प्राग्घविर्गेहात्सदस्या विधिदर्शिनः" इति ॥

( ३ ) अत्रापि सदस इति अन्ते च शाण्डिल्य इति द्राह्यायणीये पाठः ॥

उक्ते प्रवेशनोपवेशने ॥ २ ॥

प्रवेशनोपवेशने। प्रविश्यतेऽनेनेत्येवं, तत्र करणे ल्युट् (पा०३।३।११७) योरनः (पा० ७।१।१) तथा च प्रवेशनार्थीये यजुषी पूर्वमेवोक्ते। "मा मा सन्ताप्तमि-"ति "नमः सखिभ्य" इति च क्रमेण॥ अत्र धानञ्चप्यमते वहिः सदस उपवेशनात्प्रवेशनमन्त्रोनिवर्त्तते॥ २॥

ऋत्विक्पथेन गत्वा समस्तोपस्थानप्रभृति समानम् ॥ ३ ॥

एवं यजमानोपवेशनं कृत्वा तत उत्थायर्त्विक्पथेन पश्चाद्गत्वा "पात माऽग्नयः"इति समस्तधिष्ण्योपस्थानप्रभृति समानं कर्म्म ब्रह्मण उद्गा· तुश्च। तन्त्रेणानुष्ठेयमित्यर्थः। सदस उत्तरतोयोमार्गः स ऋत्विक्पथः। तत्र समस्तोपस्थानप्रभृतीति वचनात्पूर्वत्र याजमाने समस्तोपस्थानं नास्तीति गम्यते॥ ४॥

दक्षिणार्द्धे तु सदसः पूर्वमुपवेशनं, प्रस्तोतुः प्रत्युपवेशनं ब्र ह्मोपवेशनेन "निरस्तः परावसुरि"ति दाक्षिणा तृणं निरस्ये"दा· वसोः सदने सीदामीत्यु"पविशेत् ॥ ५ ॥

अपरया द्वारा सदसः, प्रविश्य औद्गात्रोपवेशनात्पूर्वं सदसोदक्षिणा· र्ध उपवेशनं कार्यम्। कथम्? ब्रह्मोपवेशनेन। ब्रह्मोपवेशनप्रकारेण प्रस्तोतुः प्रति आभिमुख्येनोपवेशनम्। तदेव सप्रकारमाह—"निरस्त" इत्यादिना॥ दक्षिणा-दक्षिणस्यान्दिश्यदूर इत्यर्थः॥ अत्रादूरार्थ- आच्प्रत्ययः (पा० ५।३।२६)॥ ५॥

"भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहम्मानुष" इत्युक्त्वौदुम्बरीङ्ग- त्वोपविशेत् ॥ ६ ॥

उपविश्य एतद्यथासूत्रितं यजुर्जपेत्। अनन्तरमौदुम्बरीं गत्वा पूर्वो· क्तेन यजुषोपविशेदित्यग्निस्वामिनः। अत्र धन्विना ब्रह्मोपवेशनाङ्गमन्त्र· जपेऽस्मिन् "नमः सखिभ्यः पूर्वसद्भ्योनमोऽपरसद्भ्य" इत्येवमादौ द्रा· ह्यायणीये पठित्वा, व्याख्यायान्ते-अथ मन्त्रजपानन्तरमौदुम्बरीं गत्वा स· मन्त्रकमौद्गात्रोपवेशनङ्कार्यमित्युक्तम्। तेनापि "आवसोरि"ति पूर्वोक्तमेव यजुस्त(१)त्र प्रतीयते॥ ६॥

अनूपविशेतामितरौ ॥ ७ ॥

इतरौ प्रस्तोतृप्रतिहर्त्तारौ औद्गात्रोपवेशनमनूपविशेताम्। पूर्वोक्तेनैव यजुषा, न ब्रह्मोपवेशनकाले॥ ७॥

---

(१) मन्त्रजपान्तोपवेशने॥

एतेनैवानुपूर्व्येण सर्वं यथासनञ्चिकीर्षेत् ॥ ८ ॥

योऽयं सदस्युपवेशने क्रम एतेनानुपूर्व्येणानेनैव क्रमेण सर्वं याजमानं ब्रह्मत्वमौद्गात्रञ्च कर्तुमिच्छेत् । यथासनमिति । स्वे स्वे स्थान इत्यर्थः ॥ ८ ॥

ग्लायेच्चेदध्यौदुम्बर्येव ॥ ९ ॥

चेत् यदि ग्लायेत् उपवेशनत्रयं स्वे स्वे स्थाने गत्वा कर्तुमशक्तो भवेत्तदौदुम्बर्यामेवोपवेशनत्रयमपि तत्तन्मन्त्रतः कार्यमिति । अध्यौदुम्बरीति सप्तम्यर्थेऽव्ययीभावे ( पा० २।१।६ ) नपुंसकत्वात् ( पा० २।४।१८ ) ह्रस्वः ॥ ९ ॥

सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनूपविशेत् ब्राह्मणाच्छंसिनं वा ॥ १० ॥

सदस्योनाम षोडशर्त्विग्भ्योऽन्यः कर्मणामुपद्रष्टेत्यापस्तम्बः ॥ सोऽपि एवमेव(१) उक्तेन प्रकारेण धिष्ण्यानुपतिष्ठन् ब्रह्माणमनुसदः प्रविशेत् ब्राह्मणाच्छंसिनमृत्विग्विशेषं वा ॥ १० ॥

तेनास्य समुपहवः स्याद्भक्षश्च समानः ॥ ११ ॥

तेन ब्रह्मणा ब्राह्मणाच्छंसिना वाऽस्य सदस्यस्य समुपहवोऽन्योऽन्यमनुज्ञानंस्यात् । "ब्रह्मन्नुपह्वयस्व" इत्युक्ते "उपहूत." इति प्रतिवचनमित्येवम् ॥ चोऽप्यर्थे । सोमभक्षोऽपि तयोरन्यतरेण सदस्यस्य समानः । एकस्मिंश्चमसे सह भक्षणं कार्य्यमित्यर्थः ॥ ११ ॥

बीभत्सेयाताञ्चेन्नाना चमसौ स्याताम् ॥ १२ ॥

चेत् यदि ब्रह्मसदस्यावेकस्मिंश्चमसे सह भक्षणाद्बीभत्सेयाताङ्घृणाङ्कुरुतान्तदा नाना पृथक् चमसौ स्याताम् । अत एवानुवादाज्ज्ञायते आस्यसंसृष्टेन चमसेन भक्षणं कार्यमिति । अन्यथा बीभत्साभावात् । नहि चमसाद्धारां स्रावयित्वा भक्षणे बीभत्सगन्धोऽप्यस्तीति।१२।

सर्पत्सु न शून्यं सदः कुर्यात् ॥ १३ ॥

संस्थिते सवने यद्यृत्विजोनिःसर्पन्ति तदा तेषु सर्पत्सु सदस्यः शून्यं सदोन कुर्य्यात् । तत्रावतिष्ठेत । अशून्यत्वायेत्यर्थः ॥ १३ ॥

तस्य दधिभक्षणान्तङ्कर्म्म ॥ १४ ॥

तस्य सदस्यस्य दधिद्र(२)प्सभक्षणान्तं स्तुत्येऽहनि कर्म भवति

---

( १ ) यदिदमुद्गातॄणां धिष्ण्योपस्थानमुक्तमनेनैवेत्यर्थः ॥

( २ ) "द्रप्सं दधि घनेतरत्" इत्यमरः ॥

नोर्ध्वमित्यर्थः ॥ १४ ॥

**स निवर्त्तेत सत्रेषु ॥ १५ ॥**

स सदस्यः सत्रेषु दधिभक्षणतोनिवर्त्तेत। दधिद्रप्सभक्षणन्तेन तत्र न कार्य्यमित्यर्थः। धन्वी तु "सत्रेषु सदस्यो न वरणीय इत्यर्थ" इत्याह॥१५॥

**विसंस्थिते सवने पूर्वया द्वाराऽन्तरेण होतुर्धिष्ण्यं मैत्रावरुणस्य च सञ्चरः ॥ १६ ॥**

विसंस्थिते—अर्धसमाप्ते सवने होतुर्मैत्रावरुणस्य च धिष्ण्यमन्तरेण धिष्णयोर्यदन्तरालं तेन तेषां सर्वेषां सञ्चरोनिष्क्रमणं सदसः पूर्वया द्वारेत्यर्थः ॥ धिष्ण्यमिति जात्येकवचनम् ॥ १६ ॥

**तद्यथेतं तद्यथेतम् ॥ १७ ॥**

तत्—तदानीं सवनमध्ये। यथेतं यथागतमेव पुनःप्रवेशः कार्य इत्यर्थः। अन्तेऽभ्यासः पटलसमाप्तिद्योतकः ॥ १७ ॥

इति द्वितीयस्य चतुर्थी कण्डिका ॥ २ ॥ ४ ॥ * ॥

---

( इति चतुर्थः पटलः ) ॥ ४ ॥

---

## अथ पञ्चमी कण्डिका—

**चमसं परिगृह्य प्रस्तोता दक्षिण ऊरावाधाय दक्षिणेन पाणिना पिधायासीत ॥ १ ॥**

सवनमुखीयञ्चमसमध्वर्युणा हृतमुद्गातॄणां, तन्दीयमानं प्रस्तोता प्रतिगृह्य स्वस्य दक्षिण ऊरावाधाय दक्षिणेन पाणिना पिधायाऽऽच्छाद्य होतुर्भक्षणकालम्प्रतीक्षमाण आसीत ॥ १ ॥

**उपहूयमानायामिडायामनुपधारयेदनुपघ्नन् ॥ २ ॥**

इडायामुपहूयमानायाम् इडो(१)पह्वानकाले स्वं चमसमिडापात्रवदास्यसम्मितन्धारयेत्। चमसस्थं सोमरसमनुपघ्नन् अङ्गुलीभिरस्पृशन्नित्यर्थः ॥ २ ॥

---

(१) अश्वत्थकाष्ठनिर्मितश्चतुरङ्गुलपरिणाहं पादपरिमितायामाबिलयुक्त चतुरङ्गुलदण्डमिडायाः ( हविषः ) आधारत्वाादडापात्रम्। हुतशेषादवदाय इडापात्रे स्थाप्यमानोहविर्भाग इडेत्युच्यते। इत्येकत्र। "इडापात्रे पूर्वं विधिना गृहीतं हविरिडोच्यते" इत्यन्यत्र ॥

वषट्कर्त्तुरनुभक्षं सर्वत्र भक्षयेयुर्मिथ उपहूय ॥ ३ ॥

वषट्कर्त्रा चमसेषु भक्षितेषु उद्गातारः स्वीयञ्चमसं भक्षयेयुस्त्रयोऽपि। मिथोऽन्योन्यमुपहूयानुज्ञाप्य(१) । अन्तर्भावितण्यर्थोऽयम् । "वषट्कर्त्तुः प्रथम भक्ष" इति श्रुतिः ॥ ३ ॥

उद्गाता प्रथमः ॥ ४ ॥

तत्रोद्गाता प्रथमं भक्षयेत् । प्रस्तोतृप्रतिपन्नं तन्ततः प्रतिपद्य, तौ (प्रस्तोतृप्रतिहर्त्तारौ) "उपह्वयेथाम्"। "उपहूतः" इत्येवमनुज्ञाप्य भक्षयेत् ।४।

अथ भक्षणप्रकार उच्यते—

दक्षिणमनुबाहुं दण्डङ्कृत्वा "श्येन" इत्यवेक्ष्य "इन्दो" इति द्विरल्पं भक्षयेद्यथासवनं छन्दांस्यादिशन् ॥ ५ ॥

आत्मनोदक्षिणं बाहुमनु चमसस्य दण्डं कृत्वा तिर्यक् चमसन्धारयित्वा "ॐ श्येनोनृचक्षा अग्नेष्ट्वा चक्षुषा पश्यामि" इति यजुषा सोममवेक्ष्य "ॐ इन्दविन्द्रपीतस्य त इन्द्रियावतोगायत्रच्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि" इति यजुषा द्विर्द्विवारं भक्षयेत् ॥ अल्पमल्पम् सकृन्मन्त्रेण सकृत्तूष्णीम् । यथासवनमिति । प्रातः सवने "गायत्रच्छ(२)न्दसः" इति । माध्यन्दिनसवने "त्रिष्टुच्छन्दस" इति । सायं सवने "जग(३)ती च्छन्दस" इति ॥ तथैवोत्तरत्र मन्त्रपाठादिति ॥ ५ ॥

"ऊर्ध्व" इति मुख्यान्प्राणानभिमृशेत् "सोमरारन्धि" इति हृदयम् । "सोमगीर्भिरिति" नाभिम् ॥ ६ ॥

भक्षणानन्तरम् "ॐ ऊर्ध्वः सप्त ऋषीनुपतिष्ठस्वेन्द्रपीतोवाचस्पते सप्तर्त्विजोऽभ्युच्छ्रयस्व जुषस्व लोकम्मा अर्वागवगाः" इति यजुषा सप्त मुख्यान्मुखभवान् "शरीरावयवाद्यत्" (पा० ५।१।६) इति यत्प्रत्ययः। प्राणान् इन्द्रियाणि(४) चक्षुषी नासिके श्रोत्रे मुखञ्चाभिमृशेत् । "ॐ सोम रारन्धि नो हृदि पिता नोऽसि मम तन्मामा हिंसीः" इति यजुषा हृदयमभिमृशेत् । "ॐ सोम गीर्भिष्ट्वा वयं वर्द्धयामोवाचोविदः सुमृडी·

---

(१) "मिथ उपहूयेति" वचनादुद्गातृचमस वषट्कर्त्ता न भक्षयेदिति गम्यते । यदि स्यात्तस्याप्यनुज्ञापनमवश्यङ्कार्यम् । "नानुपहूतेन सोमः पातव्य" इति श्रुतेः ॥

(२) द्राह्यायणीयधन्विदीपे नास्त्येतत् ।

(३) अत्र जगच्छन्दस इति सायणीये पाठः।

(४) "काकेभ्योदधि रक्ष्यतामि"त्यत्रेवात्र प्राणशब्दः स्वसत्तासमसत्ताकान्याचष्टे । लक्षणया ॥

कोन आविश'' इत्यनेन च यजुषा नाभिम् ॥ ६ ॥

एवमितरौ कुर्याताम् ॥ ७ ॥

एवमेवेतरौ प्रस्तोतृ-प्रतिहर्त्तारावपि भक्षणं कुर्याताम् ॥ ७ ॥

प्रतिहर्त्ता पश्चात् ॥ ८ ॥

तयोर्मध्ये प्रतिहर्त्ता पश्चाद्भक्षयेत्पूर्वं प्रस्तोतेत्यर्थः ॥ ८ ॥

तॐस आप्याययेदभिमृश्या-"प्यायस्वे"ति ॥ ९ ॥

तञ्चमसं स प्रतिहर्त्ता अभिमृश्य "आप्यायस्व" इत्यनेन मन्त्रेण आप्याययेत्। द्रोणकलशात्सोमरसमादाय तेन वर्द्धनमाप्यायनं, मन्त्रेणाभिमर्शनमात्रंवा। द्वयमप्युक्तङ्कात्यायनेन "भक्षयित्वा मन्त्रेणालभेरन्। सोमं वा सिञ्चेयुरि"ति ॥ मन्त्रोयथा-"ॐआप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्। भवा वाजस्य सङ्गथे" इति ॥ ९ ॥

सर्वे वैतया गायत्र्या ॥ १० ॥

अथवा सर्वे त्रयोऽप्युद्गातारः। एतया गायत्र्या "आप्यायस्व समेतु ते'' इत्यनया आप्याययेयुः ॥ गायत्र्येति वचनमुत्तरत्र सूत्रे 'गायत्र्यैवानुसवनमाप्यायनमि"ति उक्तमन्त्रप्रतिपत्त्यर्थः ॥ १० ॥

तां तृतीयसवने द्विर्ब्रूयुः "सन्ते पयाॐसी"ति माध्यन्दिने ॥ ११ ॥

ता 'माप्यायस्वे' त्येतामृचं तृतीयसवने द्विरुक्त्वाऽऽप्याययेत्। "सन्ते पयाॐसी"त्येतयर्चा माध्यन्दिने सवने। आप्यायनञ्छन्दः सम्पदर्थम् ११

गायत्र्यैवानुसवनमाप्यायनमिति शाण्डिल्यः ॥ १२ ॥

गायत्र्यैव "आप्यायस्व समेतु ते" इत्येतया अनुसवनं सर्वस्मिन्सवने सकृदुक्तयाऽऽप्यायनं भवेदिति शाण्डिल्य आचार्य आह ॥ अनुसवनमिति वीप्सायामव्ययीभावः (पा० २।१।६) समासः ॥ १२ ॥

द्वितीयाः सवनेषु नाराशॐसाः पूर्वयोश्च तृतीयौ ॥ १३ ॥

बहवश्चमसभक्षास्तेषु द्वितीयाश्चमसगणास्सवनेषु त्रिष्वपि नाराशंससंज्ञास्तद्देवत्या भवन्ति। पूर्वयोश्चेति चकारोभिन्नक्रमः। पूर्वयोः सवनयोः प्रथमद्वितीययोस्तृतीयौ चमसगणौ च नाराशंसावित्यर्थः ॥ १३ ॥

ततः किमित्यपेक्षायामाह—

तेषामनवेक्ष्य भक्षणम् "अवमैरि"ति प्रातः सवने "और्वैरि"ति माध्यन्दिने, "काव्यैरि"ति तृतीयसवने ॥ १४ ॥

तेषां नाराशंसानाम् "श्येनोनृचक्षाः" इत्यनेनावेक्ष्य भक्षणमुक्तम् (५-सू०) अनवेक्ष्योच्यते। "अवमैः" इति प्रातः सवने नाराशंसभक्षणम्।

एवमपरत्र यथासूत्रितम्॥ मन्त्रोयथा "ॐ अवमैस्ते ऊर्वैस्ते काव्यैस्ते पितृभिर्भक्षितस्य मधुमतोनाराशंसस्य सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि" इति॥ १४॥

"पितृभिरि"ति सर्वत्रानुसंहरेत्॥ १५॥

"अवमैरि"त्यादित्रिष्वपि मन्त्रेषु "पितृभिर्भक्षितस्य" इत्येतत्प्रत्येकमनुषञ्जेत् "अवमैस्ते पितृभिर्भक्षितस्ये"त्येवम्। सर्वत्र ग्रहणं सर्वेषु सवनेषु सर्वेषु मन्त्रेषु चेति प्रतिपत्त्यर्थम्॥ १५॥

प्रत्यभिमर्शने यथाकामी॥ १६॥

नाराशंसे भक्षिते-प्राणादिप्रत्यभिमर्शने याथाकाम्यं स्यादिच्छया तत्कर्त्तव्यमन्नवा कर्त्तव्यमिति॥ १६॥

प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत्प्रथमं तृतीयसवने॥ १७॥

पूर्वयोः प्रातर्माध्यन्दिनयो सवनयोः प्रथमद्वितीयौ चमसगणौ भक्षणानन्तरमाप्याययेत्। नेतरान्। प्रथमं चमसगणं तृतीयसवन आप्याययेत्। अत्र सर्वत्र सुब्रह्मण्यस्य न भक्षणम् अनुक्तत्वा,त्तस्य स्तुतावनन्वयाच्च। जैमिनिकल्पेतु तस्यापि भक्षणमु(१)क्तम्॥ १७॥

एवं भक्षणकथां समाप्याऽऽवृत्तिस्तोत्रेषु वक्तव्यमाह—

आवर्तिषु तृणे प्रतिगृह्य प्रस्तोता प्रयच्छेद्यथाप्रस्तरम्॥ १८॥

आवर्तिषु येषु स्तोत्रीया पुनः पुनरावर्त्तते तान्यावर्त्तीनि पवमानव्यतिरिक्तानि स्तोत्राणि तेषु तृणे अध्वर्युणाऽऽहृतौ स्तोत्रोपकरणदर्भौ प्रतिगृह्य प्रस्तोता प्रयच्छेत्। कस्मै कथं प्रयच्छेदित्यत्रोच्यते-यथाप्रस्तरमिति। "ब्रह्मंस्तोष्यामः प्रशोस्तः" इति मन्त्रमुक्त्वा प्रस्तरवदुद्गात्रे प्रयच्छेदित्यर्थः॥ १८॥

अनाह्रियमाणयोर्मन्त्रं जह्यात्॥ १९॥

यदा पृष्ठ्ये षडहे दर्भयोः स्थानेऽरण्यादेराहरणं तदाऽपि "ब्रह्मंस्तोष्यामः प्रशास्त." इति मन्त्रं ब्रूयादित्यर्थः॥ १९॥

तथैव जङ्घामुपहृत्य युञ्ज्यात् स्तोम"न्दीक्षायै" "तपसो" "मनसो"वाच" इति नाना धानञ्जप्यो (य्यो) यत्रानन्तराणि चत्वारि॥ २०॥

यथा प्रस्तरेण तथैव तृणाभ्यां दक्षिणां जङ्घामुपहृत्य स्तोममुद्गाता-

(१) अयमेव कल्पकारयोर्मतभेदात्प्रभाकरगुरोर्मीमांसावार्त्तिककारस्य च विप्रतिपत्तेर्मूलम्॥

युञ्ज्यात्। चतुर्भिर्मन्त्रैः "दीक्षायै" "तपसः" "मनसः "वाचः" इति पदचतुष्टयं मन्त्रचतुष्टयस्य प्रतीकोपादान प्रतिमन्त्रं "प्रजापतिस्त्वा" इत्यनुषङ्ग वक्ष्यति। तत्र "दीक्षायै वर्णेन प्रजापतिस्त्वा युनक्तु प्रजाभ्यो-ऽपानाय" इति प्रथमो मन्त्रः १ "तपसोरूपेण प्रजापतिस्त्वा" इति द्वितीयः २ "मनसोमहिम्ना प्रजापतिस्त्वा" इति तृतीयः ३। "वाचोविभूत्या प्रजापतिस्त्वा" इति चतुर्थः ४। एतैश्चतुर्भिरपि मन्त्रैरेकस्मिन्नेव स्तोत्रे स्तोमयोगः कार्यः॥ अथ पक्षान्तरमाह—नानेत्यादि। यत्रानन्तर्येण चत्वार्यावृत्तिस्तोत्राणि पूर्णानि लभ्यन्ते तत्र चतुर्षु स्तोत्रेषु चतुरोमन्त्रान्क्रमेण प्रथमं विभजेत्। एवं पुनः पुनरेकस्मिन्नेव स्तोत्रे मन्त्रचतुष्टयं भवति। तद्यथा सर्वेषु पृष्ठ्येषूक्थ्येषु वा। अत्रध-न्वी। अनन्तराणीति चवचनं विजातीयपवमानव्यवहितान्यावृत्तिस्तो-त्राणि गृहीत्वा मन्त्रविभागोन कार्य इत्येवमर्थम्। तेन प्रात सवने सो-मातिरेकनिमित्तमावृत्तिस्तोत्रमारभ्य माध्यन्दिनपवमानादुत्तराणि च त्रीणि गृहीत्वा तेषु मन्त्रविभागोन कार्य इति॥ मन्त्रोयथा—"ॐ दी-क्षायै वर्णेन तपसोरूपेण मनसोमहिम्ना वाचोविभूत्या प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय" इति॥ २०॥

अन्तः सर्वेषा"म्प्रजापतिस्त्वे"ति॥ २१॥

सर्वेषां चतुर्णामपि मन्त्राणां "दीक्षाया" इत्यादीनां प्रजापतिस्त्वा युनक्तु इत्ययमन्तोभवेत्। अन्ततोऽनुषङ्ग इत्यर्थः। इदञ्च पक्षद्वयं साधारणम्॥२१॥

अथ यत्र चत्वार्यावृत्तिस्तोत्राणि पूर्णानि न लभ्यन्ते यथाऽग्निष्टोम-संस्थे षोडशिसंस्थे च, तत्र ह्यावृत्तिस्तोत्राणां चतुष्कशोविभजने सत्येकै-कमवशिष्यते। तथा वाजपेये द्वौ। तत्र कथं स्तोमयोगोऽत आह—

उत्तरमुत्तरं लुप्येतालपीयस्सु॥ २२॥

अल्पीयस्सु चतुर्भ्योन्यूनेषु स्तोत्रेषु प्रथमेनैव मन्त्रेण स्तोम-ंयुञ्ज्यात्। उत्तरमुत्तरं स्तोमयोजनं लुप्येत। यथाग्निष्टोमे त्रीण्युत्तरा-णि लुप्तानि॥ २२॥

प्रथमेन वाजपेयसाम्नोयुञ्ज्यात्॥ २३॥

प्रथमेन मन्त्रेण वाजपेयसाम्नः स्तोमं युञ्ज्यात्। षोडशिसाम्नः प्रथ-मेन स्तोमयोजनं कृतमिहानन्तर्याद्द्वितीयस्य प्राप्तिस्तन्माभूदित्याह— प्रथमेनेति॥ २३॥

तत्प्रभृतीनि रात्रौ॥ २४॥

रात्रिपर्यायेषु प्रत्येकं चतुस्तोत्रेषु तत्प्रभृतीनि—तदादीनि सामानि । ( प्रथमप्रभृतींश्चतुरोमन्त्रान् ) क्रमेण विभजेत्(१)। अत्राग्निस्वामिनः । प्रथमप्रभृतीनि रात्रौ स्तोमयोजनानि भवन्ति। षोडशिमत्यतिरात्रे द्वितीय- प्रभृतीनि रात्रौ प्राप्नवन्ति तत्प्रतिषेधार्थमाह-प्रथमप्रभृतीनि रात्राविति २४

तथाऽतिरिक्तस्तोत्रेषु ॥ २५ ॥

आप्तोर्यामे अतिरिक्तस्तोत्रेष्वपि चतुर्षु तथैव प्रथमप्रभृतीनेव मन्त्रा- न्विभजेत्। तत्रापि सन्धेरनन्तरत्वाद्द्वितीयप्रभृतिप्राप्तौ (सन्धिस्तोत्रमा- रभ्य त्रिभागे प्राप्ते) तन्निवृत्त्यर्थं वचनमिति ॥ २५ ॥

एवन्धानञ्जप्यमतं समाप्य मतान्तरमाह—

सर्वैरेकैकं यथाम्नायꣳशाण्डिल्यः ॥ २६ ॥

सर्वै"र्दीक्षायै वर्णेन" इति चतुर्भिरपि मन्त्रैरेकैकं स्तोत्रं युञ्ज्यात्। "प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय" इत्येतद्यथाम्नाय-(यथापाठ) मेव सकृदन्ते प्रयोज्यम् न प्रतिमन्त्रमनुषङ्ग इति विशेषः ॥ २६ ॥

आवर्त्तिन्यायः सन्धौ ॥ २७ ॥

आवृत्तिस्तोत्राणां यो(२)धर्मः स सन्धिस्तोत्रेऽपि स्यात्। तस्यामावृ- त्तित्वादेवमुक्तम्। तेन स्तोमयोगः कुशास्तरणमित्यादयोधर्माः स्युः। तथा "प्रथमेनाल्पीयस्सु" इति प्रवर्त्तत इति ॥ २७ ॥

उपवसथ्येऽहनि न समामनेरन् ॥ २८ ॥

उपवसथ्येऽहनि सुत्यायाः पूर्वदिवसे न समामनेरन्। न स्वाध्यायमधी- यीरन्। सुत्येऽहनि वाचोम्लानिर्माभूदित्येवमर्थमिति निदानकारः ॥ २८ ॥

इति द्वितीयस्य पञ्चमी कण्डिका ॥ २ ॥ ५ ॥ * ॥

---

(१) ननु च "यथान्तराणि चत्वारि" इत्यनेनैव सिद्धमिदम्। सत्यम्। अषोडशि- केऽतिरात्रे सिद्धम्। यदा पुनः षोडशिमानतिरात्रस्तदा षोडशिनमुपक्रम्य चतुर्षु चतुर्षु मन्त्रविभागः स्यात्। तदा रात्र्युपक्रमे द्वितीयोमन्त्रः स्यात् तन्निवृत्त्यर्थमुक्तप्रभृतीनेव मन्त्रान्रात्रौ विभजेदिति। तदापि षोडशिनः प्रथमेनैवानुमन्त्रण "प्रथमेनाल्पीयः सु" इति वचनात् ॥

(२) स्तोमयोजनादिः ॥

## अथ षष्ठी कण्डिका—

प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य, खदिरस्य दीर्घसत्रेष्वेके, प्रादेशमात्रीः कुशाः पृष्ठ्यास्त्वक्तः समा मज्जतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः कारयित्वा गन्धैः प्रलिप्य सर्पिषा सत्रेष्वेके वैष्टुतेन वसनेन परिवेष्ट्य क्षौमशाणकार्पासानां केनचिदुपर्यौदुम्बर्यां वासयेत् ॥ १ ॥

कर्मसूत्रमुक्तम् 'उपवसथ्येऽहनि न समामनेरन्" इति। किन्तु—प्रस्तोता तु कुशाः कारयेत्। तुशब्दोविशेषणार्थः। औपवसथ्य एवाहनि प्रस्तोता कुशाः कारयेत्। कुशा नाम स्तोत्रीया गणनार्थाः काष्ठास्ता यज्ञियस्य यज्ञार्हस्य। तदर्हतीत्यर्थे "यज्ञर्त्विग्भ्यां घखञौ" (पा० ५।१।७१) इति घप्रत्ययस्तस्येयादेशः (पा० ७।१।२)। वृक्षस्याश्वत्थादेः सम्बन्धिनीः कारयेत्। दीर्घसत्रेषु खदिरस्यैवेत्येके प्राहुर्दारुप्राधान्याच्चिरस्थायिन्यः खादिर्यः कुशा भवन्ति। कारयेदित्युक्तयाऽन्यं कुशानां कर्त्तारं ज्ञापयति। तत्क्रियाप्रकारमाह—प्रादेशेत्यादि। प्रादेशमात्रीः प्रादेशप्रमाणाः। प्रमाणे (पा० ५।२।३७) मात्रजन्तान्ङीप् (पा० ४।१।१५) त्वक्त इति सार्वविभक्तिकस्तसिः(पा०५।४।४४वा०)एवमग्रेऽपि। त्वक्प्रदेशे पृष्ठार्हाः। कुशतृणवत्कुब्जपृष्ठाः स्युः। अत्र "तदर्हती"त्यर्थे यत्प्रत्ययः (पा० ५।१।६३)। समा मज्जतः। काष्ठान्तर्गतोरसोमज्जा। तत्र तदवस्थानदेशे समाः स्युः। काष्ठंभित्वा तदन्तः प्रदेशं समन्ततक्षयेदित्युक्तं भवति। अङ्गुष्ठपर्वपृथुमात्रीः। पृथुत्वेनाङ्गुष्ठपर्वमात्राः स्युः। प्रज्ञाताग्राः। यदेव वृक्षे स्थितस्याग्रस्याग्रं तदेवेदानीमपि प्रज्ञात कार्यम्। एवं का(१)रयित्वा गन्धवतीभिर्हरिद्राचन्दनादिभिरोषधीभिरनुलिप्य। एके पुनः सत्रेषु सर्पिषा प्रलेपनमिच्छन्ति। वैष्टुतेन विष्टुतीषु (२)योजितेन। कुशाविधानेनेति द्राह्यायणीये पाठः। कुशा विधायन्ते स्तीयन्ते यस्मिन्स्तत्कुशाविधानमिति तदर्थन्धन्वो प्राह(३)। वसनेन वाससा परिवेष्ट्य परितोवेष्टयित्वा क्षौ-

---

(१) ननुकारयेदित्युपक्रम्य पुनः कारयित्वेति वचनमेकस्मिन्सूत्रेऽपार्थकमिव पश्यामः। सत्यम्, प्रणाशे कुशानां भङ्गे वा पुनरन्याः कारयित्वा प्रयुञ्जीत नान्यत्प्रायश्चित्तमस्येति निबोधत।

(२) तथाच विष्टुतिः प्रयोजनमस्येत्यर्थेऽणत्र (पा० ५।१।१९) बोध्यः॥

(३) उभयमप्येकमेव संज्ञाभेदमात्रमिति वयमुत्पश्यामः॥

मादीना(१)मन्यतमेन वाससा च वेष्टयित्वा सदस्यौदुम्बर्या उपरिष्टा-द्गासयेत्स्थापयेदित्यर्थः ॥ १ ॥

अथोद्गातुः कर्मोच्यते—

ताᳪं श्वोभूते कुशैरूर्ध्वाग्रैर्वेष्टयित्वैतज्जातीयेनैव वसनेन प्रदक्षि-णमूर्ध्वदशेन परिवेष्ट्य स्पृष्टोऽनपाश्रितउद्गायेत्(२) ॥ २ ॥

श्वोभूते सुत्येऽहनि उद्गाता तामौदुम्बरीमूर्ध्वाग्रैः कुशैर्वेष्टयित्वा, एवं जातीयेन पूर्वोक्तेन क्षौमादीनामन्यतमेनैव वसनेन चोर्ध्वदशेन उप-रिकृतदशाभागेन प्रदक्षिणं परिवेष्ट्य परितोवेष्टयित्वा । स्पृष्ट इति कर्त-रिक्तः । श्लिष्ट इति वत् । अनपाश्रितः । तस्यां शरीरभाग(३)मनाक्षिप्य स्पर्शनमात्रमेव कृत्वेत्यर्थः ॥ २ ॥

धृष्टमपश्रयेतेत्येके ॥ ३ ॥

धृष्टन्निर्भयम् अपश्रयेत श्लिष्येत् । धिष्ण्योऽयमग्निरिति भीतिर्न कार्य्येत्येके प्राहुः (४) ॥ ३ ॥

स्तोष्यमाणानां मध्ये वैष्टुतं वसनं प्राक्समासं वोदक्समासं वा-उपरिदशमास्तीर्य प्रस्तोता कुशा विदध्यात्प्रस्तावान्तेषु ॥४॥

स्तोष्यमाणानामिति प्रत्युपस्थितं कालं (५)ज्ञापयति । आत्त्रस्विस्तो-त्रैः स्तोष्यमाणानां उद्गातॄणाम्मध्ये प्रस्तोता वैष्टुतं विष्टुतिप्रयोजनं(६)

---

(१) क्षुमा अतसी तस्या विकारेण क्षौमेन, एवं शणस्य विकारश्शाणं तेन, कार्पासानां विकारः कार्पासन्तेन वा । सर्वत्रात्र विकारार्थेऽण्प्रत्ययो (पा० ४।३।१३४) बोध्यः ॥

(२) अत्रे"ति गौतम" इति द्राह्यायणीये पाठोऽधिकः ॥

(३) अनपाश्रयणे हेतुमाह—"धिष्ण्योऽयम्भवति न धिष्ण्यमासादयेदि"ति (द्रा० सू०) औदुम्बर्यपि कश्चिद्धिष्ण्योऽग्निरेव । तथा च धिष्ण्योपस्थाने तदुपस्थानमप्युक्तम् । न च धिष्ण्यमग्निं कश्चिदासादयितुमर्हति । तस्मादनपाश्रित एव गायेदिति ॥

(४) द्राह्यायणीये धानञ्जप्यमतेनैतत्सूत्रितम् । अत्र हेतुमप्याह "सएव तदूर्जि-तश्रितः प्रजाभ्यऊर्जं विभजति" इति स्वाहेति (सू० ८) "ऊर्वा उदुम्बरः" "साम वै देवानामन्नम्" इति च प्रकृत्य ब्राह्मणम् "स एवे"त्यादि उक्तपूर्वम् । ऊर्जूपायामौदु-म्बर्यामपश्रितमूर्जूपं सामोद्गाता देवेभ्योविभजति इति ब्राह्मणार्थः । एतदुक्तं भवति य-दिदमौदुम्बर्यामपश्रितमुद्गायति तदिदमन्नमवष्टभ्यान्न देवेभ्यो ददातीति । यद्यनपश्रित उद्गा-येत् तदा देवेभ्योऽन्न दत्वा स्वयं रिक्त एव स्यादिति । ऊर्गित्यन्ननाम ॥ (निघ. ·।७)

(५) स्तुतेः प्राक्तनम् । तदानीमेतत्कुर्यादित्यर्थः ॥

(६) विष्टुतिगणनार्थङ्कुशास्तरणं वासइति धन्विन्याख्यानम् ।

वसनं वस्त्रं द्विगुणं कृत्वा तदाह–प्राक्समासं वोदक्समासं वेति। दशान्तपाशान्तयोः संश्लेषः समासः। तं (समासं) प्राङ्मुखमुदङ्मुखं वा कृत्वा। उपरिदशम्। उपेरि ऊर्ध्वं दशा यस्य तथाविधं कृत्वाऽऽस्तीर्य तत्र कुशा विदध्यात्कुशानां विन्यासन्निधानङ्कुर्यात्। प्रस्तावान्तेषु प्रस्तावभक्त्यन्तेषु ॥ ४ ॥

आद्येऽनेकप्रस्तावेषु ॥ ५ ॥

अनेकप्रस्तावेषु सामसु महानाम्न्यादिषु आद्ये प्रस्तावे (तदन्ते) कुशाः प्रास्थापयेत् ॥ द्राह्यायणीये तु ''प्रस्तावासु''–इति स्त्रीलिङ्गं पठित्वा अनेकप्रस्तावयुक्तासु स्तोत्रीयासु महानाम्न्यादिषु प्रथमप्रस्तावान्ते कुशाविधानमिति धन्वी व्याख्यत् ॥ ५ ॥

उदगग्रं प्रथमं विष्टावं प्राक्संस्थं प्रत्यग्वा ॥ ६ ॥

विष्टावो नाम पर्यायस्य त्रेधा विभक्तस्यैकैकोभागः स्तोत्रीयाभ्यासरूपः। तेषु प्रथमं विष्टावमुदगग्रं प्राक्संस्थं प्रागपवर्गं प्रत्यक्–प्रत्यगपवर्गं वा कुर्यात्। उदगग्राभिः कुशाभिः क्रमेण पुरस्तात्प्रत्यग्वा निहिताभिर्गणयेदित्यर्थः ॥ ६ ॥

तं पश्चिमेन मध्य(म)देशेनोदक्संस्थं प्रागग्रं प्रत्यग्वा ॥ ७ ॥

तंपश्चिमेन। तस्य प्रथमस्य विष्टावस्य पश्चिमे प्रदेशे। अत्र तमिति ''एनपा द्वितीया'' (पा० २।३।३१) इति षष्ठ्यर्थे द्वितीया। मध्य(म)देशेन मध्य(म) देशतः। उदक्संस्थं मुदगपवर्गं द्वितीयं विष्टावं प्रागग्राभिरुदग्राभिर्वा गणयेदित्यर्थः। प्रागग्रमित्यादि गणनक्रियाविशेषणमिति द्वितीयान्तं ''क्रियाविशेषणानाङ्कर्मत्वन्नपुंसकत्वञ्च''–त्यनुशासनात्। प्रागग्रं यथास्यात्तथेत्येवमर्थः ॥ ७ ॥

तं पश्चिमेनोदगग्रं प्रत्यक्संस्थमेवं विधाः पर्याया उत्तरोत्तराः ॥८॥

तं पश्चिमेन। तस्य द्वितीयस्य विष्टावस्य पश्चिमे प्रदेशे तृतीयं विष्टावं विदध्यात्। एवमेकः पर्यायोभवति। तस्य प्रथमस्य पर्यायस्योत्तरे द्वितीयः। तस्याप्युत्तरे तृतीयः। इत्येवंविधास्त्रयोऽपि पर्याया उत्तरोत्तराः कुशाविधाने कार्याः ॥ ८ ॥

पर्यायविष्टावान्सन्दध्यात् ॥ ९ ॥

पर्यायांश्च विष्टावांश्च सन्दध्यादन्योऽन्यसंलग्नान्कुर्यात् ॥ ९ ॥

पर्यायादिषु हिङ्कारेण स्तुवीरन ॥ १० ॥

हिङ्कृत्य पर्यायस्यादौ, स्तुवीरन्। पर्यायोनाम त्रेधा विभक्तस्य स्तोमस्यैकैकोभागः। अत्र त्रिवृदादिस्तोमान्तं पर्याय—विष्टाव—कृतिर्ब्राह्म-

णेनैवोक्तेति न सूत्रकारस्य कृत्यमस्ति । यद्येवं हिङ्कारोऽपि कृत एव ब्राह्मणेन "तिसृभ्योहिङ्करोती"ति । सत्यम् । तत्रैकत्वश्रुतेरुद्गातुरेव हिङ्कारे प्राप्ते त्रयाणामपि प्राप्त्यर्थमिदम् ॥ १० ॥

उत्तमां प्रस्तु "त्यैषे"तिशंसितारमीक्षते ॥ ११ ॥

प्रस्तोता उत्तमामन्त्यां स्तोत्रीयां प्रस्तुत्य प्रस्तावन्दत्वा "एषा" इति ब्रुवन् शंसितारं शंसिष्यन्तमीक्षते । असमाप्त एव स्तोत्रे शस्त्रारम्भप्रबोधनार्थम् ॥ ११ ॥

"स्तुतस्य स्तुतमसी"ति यजमानवचनम् ॥ १२ ॥

"स्तोत्रसमाप्त" इतिशेषः ॥ मन्त्रोयथा—"ॐस्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वदामा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तोवनेमहि भक्षीमहि प्रजामिषम्" इति ॥ १२ ॥

सवनसंस्थासु प्रशास्त्रोक्ता यथेतमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं बहिर्वेदि मूत्रं कुर्युः ॥ १३ ॥

सवनसंस्थासु सवनसमाप्तिषु । 'संस्थाऽऽधारे स्थितौ मृतौ' इत्यमरः । प्रशास्त्रा मैत्रावरुणेन "सर्पत" इत्युक्ता यथेतं यथागतन्दक्षिणेनौदुम्बर्यां गत्वाऽपरया पश्चिमया द्वारा निष्क्रम्याऽऽग्नीध्रीयस्य पश्चिमेन गत्वा बहिर्वेदि वेदेर्बहिर्मूत्रं कुर्युः॥ अर्थप्राप्तस्य मूत्रस्य कालदेशनियमोऽयं न तु विधिः॥१३॥

वाचं यच्छेयुर्यावदुदक्याः स्युः ॥ १४ ॥

उदकमर्हन्तीत्युदक्याः । तदर्हतीत्यर्थे यत्प्रत्ययः(पा० ५।१।६३) यावदकृतशौचाः स्युस्तावद्वाचं यच्छेयुर्वाक्संयमनं कुर्युः ॥ १४ ॥

एतन्मृगतीर्थम् ॥ १५ ॥

यदेतदुक्तं "पश्चिमेनाग्नीध्रीयमि"ति एतस्य(१) संज्ञा मृगतीर्थमिति । मार्गतामेतत्तीर्थं यद्यर्थिनोभवन्ति बहिर्निर्गमने ॥ १५ ॥

तेन न भूयः शम्यापरासाद्गच्छेयुः ॥ १६ ॥

तेन मृगतीर्थेन निष्क्रम्य शम्यापरासाद्भूयः परतोन गच्छेयुः । हस्तेन वेगयुक्तेन प्रास्ता शम्या यावन्तं प्रदेशं गच्छेत्स शम्यापरासः । शम्या काष्ठविशेषः । सा परास्यते क्षिप्यते यत्र स शम्यापरासस्तस्मात् । "असु क्षेपणे (दि०प०) ततोऽधिकरणे घञ् ॥ १६ ॥

योभूयोजिगमिषेदाप्रानेन स गच्छेत् ॥ १७ ॥

यस्तु शम्यापरासाद्भूयः परतोऽपि (विप्रकृष्टदेशं) जिगमिषेत् गन्तुमिच्छेत्स आप्रानेन तीर्थेन यथोक्तेन (१।५।४) गच्छेत् ॥ १७ ॥

इति द्वितीयस्य षष्ठी कण्डिका ॥ २ ६ ॥ * ॥

---

(१) अग्नीध्रस्य पश्चाद्योदेशस्तस्य ॥

## अथ सप्तमी कण्डिका—

**अथ धिष्ण्यानुपतिष्ठेरन् समस्तेनोत्तरयोः सवनयोरिति गौतम—शाण्डिल्यायनौ ॥ १ ॥**

अथ सवनसंस्थानन्तरं निष्क्रान्ताः कृतावश्यकाः पुनराग्नानतीर्थेन प्रपद्य यथापूर्वं धिष्ण्यानुपतिष्ठेरन् धिष्ण्योपस्थानं कुर्युरुत्तरयोः सवनयोः "पात माऽग्नयः" इति समस्तेनैव मन्त्रेण, नेतरैस्तत्रैव तिष्ठन्तः सर्वान्समीक्षमाणा इति गौतमः । शाण्डिल्यायनः शाण्डिल्यपुत्रश्चाहतुः ॥१॥

**सर्वेणेति धानञ्जप्यः (य्यः) ॥ २ ॥**

आहवनीयोपस्थानादारभ्य प्रत्येकं सर्वेण सर्वैरपि मन्त्रैर्यथास्वं धिष्ण्योपस्थानमिति धानञ्जप्य (य्य) आह ॥ २ ॥

**अनुपस्थानं शाण्डिल्यः ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

**एवमेवनिष्क्रम्य पृथक् स्तोत्रेभ्यः समस्तेनोपतिष्ठेरन्-यान्यूर्ध्वमुक्थ्येभ्यः ॥ ४ ॥**

तृतीयसवने उक्थ्येभ्यः उक्थ्यस्तोत्रेभ्य ऊर्ध्वं यानि स्तोत्राणि षोडशिसामादीनि तदर्थमेवाऽपरया द्वारा निष्क्रम्य "पातमाऽग्नयः" इति समस्तेनोपस्थानं प्रतिस्तोत्रं कार्यमित्यर्थः ॥ ४ ॥

तत्र विशेषमाह—

**पर्यायेभ्यस्तु रात्रेः ॥ ५ ॥**

तुरेवार्थे रात्रेः रात्रिसम्बन्धिभ्यः पर्यायेभ्य एव पृथक् पृथगुपस्थानं न पुनः प्रतिस्तोत्रम् । तेन षोडशिस्तोत्रे वाजपेये च बृहत्स्तोत्रे सन्धौ च पृथक् पृथगुपस्थानं तथातिरिक्तस्तोत्रेष्वपि प्रतिस्तोत्रमुपस्थानं भवतीति पूर्वसूत्रेणोक्तं भवति ॥ ५ ॥

**यथासनमुपविश्य प्रस्तोता हविर्द्धानं गच्छेन्माध्यन्दिने ॥ ६ ॥**

धिष्ण्योपस्थानानन्तरं द्वारबाहुसम्मार्जनप्रभृति सर्वं कृत्वा यथासनं यद्यस्य स्वमासनं तस्मिन् यजुषोपविश्य यजमानोपहवानन्तरं प्रस्तोता हविर्द्धानङ्गच्छेत् माध्यन्दिने सवने कर्मार्थम् । तदुक्त"मेतत्सर्वं कुर्यादुत्तरयोः पवमानयोरि"ति(१) । ( १।१२।१८) ॥ ६ ॥

---

( १ ) ननु एतत्सर्वङ्कुर्युर्यदा धिष्ण्यानुपतिष्ठेरन्नि-(२।३।१६)ति सूत्रोक्तार्थोऽत्र सूत्रे निर्णिक्तः । यद्येवं तेनैव सिद्धत्वाद्यथासनमुपविश्येति न वक्तव्यम् । तथा हविर्द्धानं गच्छेदित्यपि । "एतत्सर्वङ्कुर्यात्" इत्यतिदेशवचनात् । सत्यम् । नियमार्थमेतत्सूत्रम् ।

हुत आदित्यग्रहे प्रतिहर्त्ताऽऽर्भवे ॥ ७ ॥

आदित्यग्रहहोमानन्तरमार्भवे तृतीये सायं पवमाने कर्मार्थम्प्रति-हर्त्तैव गच्छेत् ॥ ७ ॥

उभयत्र सर्वे सत्रेषु ॥ ८ ॥

सत्रेषु तूभयत्रार्भवे माध्यन्दिने च पवमाने सर्वे त्रयोऽप्युद्गातारो-हविर्द्धानङ्गच्छेयुः । (१)अत्र यजमानत्वात् इति हेतुनिगदोऽग्नि-स्वामिनः ॥ ८ ॥

पवमानयोरुत्तरयोर्धिष्ण्यविहरणे मार्ज्जालीयं हरन्तः पश्चिमेन यजमानं हृत्वा तेनैव प्रतिहरेयुः ॥ ९ ॥

उत्तरयोः पवमानयोर्माध्यन्दिनार्भवयोर्धिष्ण्येष्वग्निविहारे मार्जाली-यमग्निं हरन्तः सदसः पूर्वया द्वारा प्रविश्य यजमानस्य पश्चिमेन हृत्वा तेनैव प्रतिहरेयुः पुनः प्रतिहृत्य मार्जालीयस्थाने निदध्युः । अव्यवा-यार्थमित्यग्निस्वामिनः । अदृष्टार्थमिति धन्वी । उद्गातृणामनेन कर्मणा कः सम्बन्ध ? इति चेदुच्यते । उक्तं याजमान—ब्रह्मत्वे उद्गाता कुर्या-दिति तत्र सम्बन्ध इति ॥ ९ ॥

माध्यन्दिनेन स्तुत्वा सत्रेषु दाधिघर्मस्य भक्षयेयुः समुपहूय "दधिक्राव्ण" इति ॥ १० ॥

माध्यन्दिनेन पवमानेन स्तुत्वा सत्रेषु समुपहूय मिथः दधि-घर्मस्यैकदेशं सर्वे भक्षयेयुः "दधिक्राव्ण" इत्येतयर्चा ॥ १० ॥

अस्या उत्तमं पादं दशमेऽहन्यभ्यस्येयुः ॥ ११ ॥

दशमे सात्रिके अहनि अस्या ऋचः उत्तममन्तिमं पादम् अभ्यस्येयुः पुनर्ब्रूयुः । "परोक्षमनुष्टुभमुपयन्ति" इति ब्राह्मणेन प्रत्यक्षमनुष्टुभां परि-हरणीयत्वात् । तदर्थोऽभ्यास इति भावः ॥ ११ ॥

---

प्रस्तोतैव गच्छेन्नेतराविस्येकोनियमः । तथोपवेशनानन्तरं गच्छेन्नपूर्वमित्यपरः । अन्यथा प्रस्तोतुरुपवेशनस्य दृष्टप्रयोजनाभावादुपस्थाने कृते तदानीमेव हविर्द्धानगमनं स्यात् । तन्निवृत्त्यर्थमुपविश्यैवेति वचनमदृष्टार्थमिति ॥

(१) सर्वत्र होतृमैत्रावरुणिधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नी-ध्रीयं हविर्द्धानं गच्छेयुः । "दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्द्धानमि"—(२।२।१५)ति वचनात् । गत्वा हविर्द्धानं रराट्यालम्भनादि पवित्रनिष्पीडनान्तं कृत्वा निःसर्प्य प्रवृत-होमौ च हुत्वा सदस्यागत्य "योमआत्मा" इत्युपवेशनान्तं कृत्वा पवमानस्य ऋग्जपादि कर्त्तव्यमिति समुदितोऽर्थः ॥

पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयꣳसदश्च दक्षिणा नयेयुस्तीर्थेन ॥ १२ ॥

दक्षिणादानकाले महावेदेर्दक्षिणपार्श्वे पूर्वमेव दक्षिणाः स्थाप्याः। ताः पत्नीशालायाः पूर्वेणोदीचीं नीत्वा पुनराग्नीध्रीयं सदश्चान्तरेण। आग्नीध्रीयसदसोर्मध्येन प्राचीं नीत्वा पुनराप्नानेन तीर्थेन उदीचीं नयेयुः ॥ १२ ॥

सर्वासा"न्देवस्य त्वे"ति पुरस्ताज्जपः ॥ १३ ॥

सर्वासां सर्वदक्षिणानां प्रतिग्रहे "देवस्यत्वे"ति मन्त्रस्य पुरस्तात्प्रथमं जपः कार्यः। यथा "ॐ देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याम्प्रतिगृह्णामि"इति ॥ १३ ॥

"वरुणस्त्वे"ति यथादैवतं प्रतिगृह्णीयात् ॥ १४ ॥

यथादैवतमिति। यस्य मन्त्रस्य या देवता प्रतिग्रहमन्त्रे पठिता तामादिश्य तत्प्रतिगृह्णीयात्। यथा "वरुणायाश्वम्" "अग्नये हिरण्यम्" "वायवे मृगम्" इत्यादि। "वरुणस्त्वे"ति मन्त्रेण। मन्त्रो यथा—"ॐ वरुणस्त्वा नयतु देवि दक्षिणे वरुणायाश्वं(१) तेनामृतत्वमशीय वयोदात्रे भूयान् मयोमह्यं प्रतिग्रहीत्रे" इति ॥ १४ ॥

यथाजाति मृगान् ॥ १५ ॥

प्रतिगृह्णीयादिति वर्त्तते। यथाजाति या यस्य जातिस्तामादिश्य, यथा "वायवे मृगम्"(२)इति। मृगानिति पशुजातीनाह "मृगः पशौ कुरङ्गे च करि नक्षत्र भेदयोः"इति विश्वप्रकाशः ॥ १५ ॥

अप्राणच्च ॥ १६ ॥

न प्राणितीत्यप्राणत्। प्रपूर्वादनितेः प्राणनार्था–(अ०प०)लटः शतरि

---

(१) अत्रेदं बोध्यम्। द्रव्यदेवते विभिद्य तत्र मन्त्रपाठोऽत्रोह्यः। यथा—"रुद्राय गान्तया" "अग्नयेऽजन्तेन" "अग्नये हिरण्यन्तेन" "अग्नीषोमाभ्यामजान्तया" "त्वष्ट्रेऽविन्तया" "बृहस्पतये वासस्तेन" "उत्तानाङ्गिरसायाप्राणत् तेन" "पूष्ण उष्ट्रस्तेन" "वायवे मृगम्" "प्रजापतये पुरुषं प्रजापतये हस्तिनम्" "प्रजापतये वराहम्। प्रजापतये व्रीहियवाꣳस्तैः" "क्षेत्रपतये तिलमाषास्तैः" "सवित्रेऽश्वतरं वाऽश्वतरीं वा तया" इत्येवम्ब्राह्मणे पठ्यते। अत्र तयेत्यश्वतरीमभिप्रेत्य प्रयुक्तम् ॥

(२) सूत्रे "मृगानि"ति बहुवचनम् "वायवे हरिणं वायवे खगम्" इत्येवं सर्वस्वदक्षिणे क्रतौ मृगस्यापि शशहरिणादेर्गृहे विद्यमानस्य दानमस्तीति बोधनाय। सर्वे वनचरा मृगाः "पशवोऽपि मृगाः" इत्यमराभिधानाश्च ॥

सामान्ये नपुंसकम् । अनिन्द्रियन्द्रव्यञ्च यथाजात्यादिशन्प्रतिगृह्णीयात् । यथा च श्रूयते 'उत्तानाङ्गिरसायाप्राणत्" इति । तच्चानः शय्यासनोपानदादि ॥ १६ ॥

पुंवन्मिथुनान्यन्यत्राजाभ्यः ॥ १७ ॥

मिथुनानि पुंवत् मिथुनप्रतिग्रहे पुंस इव मिथुनानां स्त्रीपुंसानां देवतामादिशेत् । यथा "वरुणायाश्वौ"इति । अत्राश्वश्चाश्वा चेत्यश्वौ(१) । एवमादि । अन्यत्राजाभ्यः । अजास्तु मिथुनधर्मेण न प्रतिगृह्णीयात् । अजमिथुने पृथक् पृथक् देवताम्नानात् । तद्यथा "अग्नयेऽजम्" "अग्नीषोमाभ्यामजाम्"इति ॥ १७ ॥

"तेन" "कइदमि"त्युपरिष्टाज्जपः ॥ १८ ॥

"तेनामृतत्वमसीय" इत्यादि "प्रतिग्रहीत्रे" इत्यन्तम् । तथा "क इदं कस्मा अदात्" इत्यादि "कामतत्ते" इत्यन्तं (२)द्वयमप्युपरिष्टाज्जपेत् ॥ १८ ॥

तत्रोहापादीनि "त्वा" "देवि" "दक्षिणे" "अदः" इति चयत्तत्स्यात् । "तेन" "दात्रे" "इदम्" "आविश" "एतत्ते" इति च "भुञ्जती"ति च "भूयाद्धिꣳसी"रिति च (३)॥ १९ ॥

तत्र तस्मिन्दक्षिणाप्रतिग्रहणे ऊहापादीनि यान्यूहमापद्यन्ते व्यक्तिव(४)चनैस्तानि पदानि "वक्ष्यन्त" इति शेषः । तान्येवाह-"त्वा" इत्यादि । "वरुणस्त्वा नयतु देवि दक्षिणे" इत्यत्र पदत्रयं यथास्वमूह्यम् "वरुणोवोनयतु देव्योदक्षिणाः" इत्येवम् । अद इति यत्तत्स्यादित्यस्यायमर्थः । अद इति द्वितीयान्तं च पदमूह्यम् । यत्संख्यं यल्लिङ्गञ्च तद्द्रव्यंस्यात्तेनाकारेणोह्यमिति च । ननु चाद इति द्वितीयान्तं पदं श्रुतौ

---

( १ ) अत्र "पुमान्स्त्रिया" (पा० १।२।६७) इत्येकशेष एवमन्यत्रापि यथायथमूह्यम् ।

( २ ) अत्र शाखाभेदेनैतयोरन्यतरस्य प्रयोगोदृश्यते । यथा कौथुमीयाना"क इदमि"त्येतज्जप एव । मन्त्रो यथा—"ॐ क इदं कस्मा अदात्कामः कामायादात् कामोदाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते" इति ।

( ३ ) अत्रद्राह्यायणीये सूत्रद्वयमनेन कृतन्तत्रापि पाठभेदोदृश्यते-यथा-तत्रोहापादीनि पदानि ॰ "त्वा" "देवि" "दक्षिणे" "अदः" इति च यत्तत्स्यात् "तेन" "दात्रे" "इदम्" "आविश" "एतत्ते"भुञ्जति" "हिꣳसी"रिति च २१ इति ॥

( ४ ) का व्यक्तिः स्त्रीपुंनपुंसकेषु । किं वचनमेकत्वद्वित्वबहुत्वेषु ॥

ना(१)स्ति। सत्यम्। "वरुणायाश्वमि"त्यादिषु प्रतिगृह्यद्रव्यवचनानां द्वितीयान्तानामेतदुपलक्षणम्। तेनाश्वमश्वावित्यादि लिङ्गवचनोहः कार्यः। तथा "तेनामृतत्वमशीय वयोदात्रे" इति श्रुतौ "तेन" "दात्रे" इति पदद्वयमूह्यम्। यथा "ताभ्यामसृतत्वमशीय वयोदातृभ्याम्" (२)इति। तथा "क इदम्" इतिमन्त्रे "इदम्" "आविश" "एतत्" इति पदत्रयमूह्यम्। इदम् इममिमौ इति। एवमाविश, (३)आविशतम्, आविशत, इति। एवमेतत्एष एषा इति। अत्र तेशब्दस्य नास्त्यूहः। केवलमेतच्छब्दप्रदर्शनार्थन्तस्य सहपठितस्य सूत्रेणोपादानमिति बोध्यम्। तथा "अन्नस्यान्नपतिः प्रादात्" इत्यस्मिन् "भुञ्जति" "हिꣳसीः" इति पदद्वयमूह्यम्। यथा "भुञ्जत्योमा मा हिꣳसिष्ट" इति ॥१९॥

अश्वरथश्चेद्दद्यात्पूर्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाऽश्वमुखानि संमृज्याद्द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकस्य "अश्वोऽसि" एतत्प्रभृतिभिरुदक्सꣳस्थमिति धानञ्जप्यः (य्यः) ॥ २० ॥

चेत् यद्यश्वरथं दद्याद्यजमानः तमश्वरथमुद्गाता आग्नीध्रीयस्य पूर्वे प्रदेशे समीपे प्राङ्मुखं प्रत्यङ्मुखं वा अवस्थाप्य स्थापयित्वा पुरस्ताज्जपं जपित्वा "देवस्य त्वे"ति मन्त्रजपं प्रथमंकृत्वा "अश्वोऽसि अस्योऽसि मयोऽसि हयोऽसि वाज्यसि–सप्तिरसि–अर्वाऽसि वृषाऽसि" इत्यश्वनामान्यष्टौ पठितानि तानि विभज्य द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकमश्वस्य मुखं उदक्संस्थं दक्षिणोपक्रममुदगपवर्गं सम्मृज्यात्॥ तेन सामर्थ्याच्चतुर्भिरश्वैर्युतस्य रथस्य प्रतिग्रहेऽयन्धर्म इति धानञ्जप्यमतम्॥२०॥

धुर्यौ प्रथममित्यपरम् ॥ २१ ॥

धुर्यौ धुरियुक्तौ (धुर्वहौ) (४)अभ्यन्तरावश्वौ प्रथमं मुखे सम्मृ-

---

(१) प्रतिग्रहद्रव्यदैवतबोधिकायामित्यर्थः।

(२) दातृशब्दोयजमानवाची।

(३) एष तैत्तिरीयाणाम्मन्त्रपाठे पठितः नूनं छन्दोगानामपि शाखान्तरे क्वचिदेतदकारान्त स्यात्सूत्रकृत्पाठदर्शनात्। अस्माकन्तु (कौथुमीयानां) "कामः समुद्रमाविशत्" इतिपाठेऽस्य कामपरत्वादूहोनास्ति। तथाहि काम एव समुद्रं तद्वत्प्रहिता दक्षिणा निर्भयमाविशत् नाहमिति मन्त्रार्थः॥

(४) "धुरोयड्ढकौ" (पा–४।४।७७) इति यदन्तस्यायमेवार्थोयुक्तः। धुरि युक्ताविस्यर्थनिर्देशः। "धूर्वहे धुर्य धौरेय धुरीणाः सधुरन्धराः" इत्यमरोऽपि॥

ज्यादित्यपरं मतम् ॥ २१ ॥

दक्षिणं पूर्वम् ॥ २२ ॥

तयोरपि दक्षिणमश्वम्पूर्वम्प्रथमं सम्मृज्यात् ॥ २२ ॥

तथा प्रष्टौ ॥ २३ ॥

तथैव प्रष्टौ बहिर्युक्तौ ( पार्श्ववर्त्तिनौ ) अश्वौ सम्मृज्यात् । तयोरपि दक्षिणं पूर्वमित्यर्थः । अस्मिन्नपि पक्षे यथापाठमेव मन्त्रक्रमः ॥२३॥

सर्वाण्येकैकस्मिन् उदक्संस्थमिति शाण्डिल्यः ॥ २४ ॥

सर्वाण्यष्टावप्यश्वनामानि एकैकस्मिन् प्रत्येकमश्वेषु (१)प्रयुञ्जीत उदक्संस्थं दक्षिणत आरभ्य उदगपवर्गमिति शाण्डिल्य आचार्य आह ॥ अत्र "कर्मव्यतिहारे सर्वनाम्नोद्वे वाच्ये समासवच्चबहुलम्" (पा० ८। १।१२ वा० ) इति द्विर्भावाऽऽद्येकशब्दस्य बोध्यम् ॥ २४ ॥

सर्वाण्येकस्मिंस्तूष्णीमितराणीत्यपरम् ॥ २५ ॥

सर्वाणि अष्टावप्यश्वनामान्येकस्मिन्नेव दक्षिणेऽश्वे प्रयोज्यानि, तूष्णीमितराण्यश्वमुखानि सम्मृज्यादित्यपरं मतम् ॥ २५ ॥

एतान्येवाश्वास्वश्वतरेष्वश्वतरीषु च यथार्थमूहेत् ॥ २६ ॥

एतान्येवाश्वनामान्यश्वासु अश्वतरेषु अश्वतरीषु च यथार्थं यथासम्भवमूहेत् । यथा "अश्वासि, १ अत्या(२)सि २ मयोऽसि ३ हयासि ४ वाजिन्यसि, ५ सप्तिन्यसि, ६ वृष्ण्यसि(३) ७ अर्वत्यसि ८ इति । मयः शब्दस्तु सान्तः सुखवचनोऽव्ययम् । (नि० ३।६।७) तेनासावनूह्य एव । एवम् अश्वतरोऽसि अश्वतर्यसि इत्यादि ॥ २६ ॥

---

( १ ) चतुर्षु क्रमेण यथापूर्वम् ॥

( २ ) सततगन्त्र्यसि । "अत–सातत्यगमने" (भ्वा०प०) तच्छीले कर्त्तरिबाहुलकाथत् । मय इति सान्तं नाम ।

( ३ ) अत्र वृषाऽसीति पुंसि प्रयोगस्तत्र स्त्र्यसीति धन्व्यौहत् ॥ तत्र वृषा–वृषेः कर्त्तरि कनिन्नन्तस्तस्य गर्भसेचक इत्यर्थः । "वृषुसेचने" (भ्वा०प०) पठ्यते । तत एव संज्ञायां स्त्रियां क्तिचि ( पा०३।३।१७४) वृष्टिरिति भवति । तदेतदभिप्रेत्याग्निस्वामिभिस्तेन शब्देनोहितं किन्तु न हि सा वृषार्थं साधयितुमलमिति स्त्र्यसीत्येवोहोधन्विना कृतः साधीयान्प्रतिभाति । किन्तु शिष्टानि पञ्च नामान्यश्वजातिवाचकानीति वदन्धन्वी अश्वा अत्या हयातिरिक्तेनोहमाह ॥ तज्जातिपुरस्कारेणैव स्त्रीपुंसयोर्बोधं सोऽभिमनुते । स्त्रीति तु स्त्यायेते संघीभवतः शुक्रशोणिते अस्यामित्यर्थे स्त्यैधातोः संघाताऽर्थाड्ड्रट् प्रत्यये डित्वाट्टिलोपे टित्वान्ङीपि साधुः ॥

त्रिभिश्चेदर्द्धान्येकस्मिन्नर्द्धानि द्वयोर्द्वैधं द्वयोः ॥ २७ ॥

चेत् यद्यश्वरथस्त्रिभिरश्वैर्युक्तः स्यात्तदाऽर्द्धानि चत्वार्यश्वनामान्येकस्मिन्ब्रूयात् । इतराणि चत्वारि द्वयोरश्वयोः समं विभज्य युञ्जीत पूर्वोक्तेनैव दक्षिणोत्तरक्रमेण । द्वैधं द्वयोरिति । यदि द्वाभ्यामेवाश्वाभ्यां रथो युक्तस्स्यात्तदा द्वयोरश्वयोः समं विभज्य ब्रूयादित्यर्थः ॥ २७ ॥

इति द्वितीयस्य सप्तमी कण्डिका ॥ २ ॥ ७ ॥ * ॥

---

## अथ अष्टमी कण्डिका ।

"आदित्यानामि"ति रथशिर आलभ्य जपेत् ॥ १ ॥

सम्मार्ज्जनानन्तरम् "आदित्यानाम्" इति एतद्यजू रथशिर आलभ्य स्पृष्ट्वा जपेत् ॥ शिरः प्रवृत्तीरथकारेभ्योज्ञेया ॥ मन्त्रोयथा "आदित्यानां पत्मान्वहि नमस्तेऽस्तु मा मा हिꣳसीः" इति ॥ १ ॥

यद्रथ्य ꣳ स्या-"द्वायो"रिति चर्म्मण्यं प्रतिगृह्णीयात् ॥ २ ॥

रथस्येदं रथ्यं "रथाद्यत्" (पा०४।३।१२१) इति यत्प्रत्ययः। यत्किञ्चिद्रथाङ्गम् चर्म लोह हिरण्यादिर्निर्मितं स्यात् । तत्र यत् चर्मण्यं चर्मणा(१) निर्वृत्तं तद् "वायोष्ट्वे" त्यनेन यजुषा प्रतिगृह्णीयात् । मन्त्रो यथा-" ॐ वायोष्ट्वा तेजसा प्रतिगृह्णामि नक्षत्राणां त्वा रूपेण प्रतिगृह्णामि, सूर्यस्य त्वा वर्च्चसा प्रतिगृह्णामि" इति ॥ २ ॥

"नक्षत्राणाम्" इत्यस्थिमयम् ॥ ३ ॥

यदस्थिमयं रथ्यं ( गजदन्तादिनिर्मितम् ) रथाङ्गम् । अत्रविकारार्थे ( पा० ४।३।१३५ ) मयट् प्रत्ययः। तद् "नक्षत्राणाम्" इत्यनेन पूर्वोक्तेनैव यजुषा प्रतिगृह्णीयात् ॥ ३ ॥

"सूर्यस्ये" त्यायोलौहे ॥ ४ ॥

आयोलौहे । अयसा लोहेन च निर्वृत्तम् (पा० ४।२।६८) अण् आदिवृद्धि (पा० ७।२।११७) तस्मिन् । अत्र लोहमिति सर्वन्तैजसन्द्रव्यमाह । तथा च विश्वप्रकाशः । "लोहं जोङ्गकं सर्वतेजसि" इति । तथा(२)

---

(१) अर्थनिर्देशोऽयं तेन कर्मण्यवदत्रापि साध्वर्थे यत् । "भवेच्छन्दसी"ति (पा० ४।४।११०) वा यत् मथ्यादिवत् ॥ धन्वी तु, चर्मविकारमिति व्याचख्यौ ॥

(२) धन्वी तु आयसं ताम्रञ्चेत्येतद्द्वयमेवाह ॥ तन्मतेऽत्र लोहमिति ताम्रमेवाह । अयस्तु कार्ष्णायसम् ॥

चायमर्थः ॥ यत्कार्ष्णायसं रथ्यम् यच्च ताम्ररजतकांस्यरीतिकादिभ्योलोहेभ्योनिर्वृत्तन्तत् "सूर्यस्य त्वे"-त्यनेन यजुषा प्रतिगृह्णीयात् इति ४

हिरण्ययञ्च ॥ ५ ॥

यद्धिरण्ययं (१)जातरूपमयं तदप्यनेनैवोक्तपूर्वेण "सूर्यस्ये"ति यजुषा प्रतिगृह्णीयात् । हिरण्ययमिति विकारार्थमयटोमलोपेन निपातितः (पा० ६।४।१७५ ) ॥ ५ ॥

दक्षिणेन रथङ्गत्वा "रथन्तरमसी"ति दक्षिणं चक्रमालभेत ॥ ६ ॥

रथस्य दक्षिणेन गत्वा "ॐरथन्तरमसी"त्यनेन यजुषा दक्षिणं चक्र मालभेत ॥ ६ ॥

"वामदेव्यमसी"त्यधिष्ठानम् ॥ ७ ॥

अधिष्ठानं (२)रथिन उपवेशनस्थानन्तत् "वामदेव्यमसी"त्यनेन यजुषाऽऽलभेत ॥ ७ ॥

"बृहदसी"त्युत्तरं चक्रम् ॥ ८ ॥

स्पष्टम् ॥ ८ ॥

"अङ्कान्यङ्कू"इति चक्रे एव सम्मृश्यात् ॥ ९ ॥

ये पूर्वमालब्धे चक्रे ते एव पुनरपीत्येवशब्दार्थः । स्पष्टमन्यत् ॥ मन्त्रोयथा—"ॐअङ्कान्यङ्कूअभितोरथं योध्वान्तं वाताग्रमभिसञ्चरन्तौ दूरे हेतिरिन्द्रियवान् पतत्री तेनोऽग्नयः पप्रयः पालयन्तु" इति ॥ ९ ॥

"वैश्वानर" इति दक्षिणेन पादेनारोहेत् ॥ १० ॥

"रथमि"ति शेषः ॥ मन्त्रोयथा—"ॐवैश्वानरः प्रत्नथा नाकमारुह दिवः पृष्ठे मन्दमानः सुमन्मभिः । स पूर्ववज्जनयञ्जन्तवेधनाः समानम यान्पर्येति जागृविः" इति ॥ १० ॥

आरुह्य जपे-"द्विदेषत" इति ॥ ११ ॥

उभाभ्यां पादाभ्यां रथमारुह्य "गिदेषते" इति यजुर्जपेत् ॥ मन्त्रोयथा—"ॐ गिदेषते रथ एष वामश्विना रथोरिष्टोविश्वभेषजः" इति ॥ ११ ॥

"कृशेति" सव्यानभीशूनायच्छेत् ॥ १२ ॥

सव्यान् रथस्य सव्ये(वामे) पार्श्वे यावश्वौ तयोरभीशून्रश्मीन् "अभीशुः

( १ ) अत्र 'हिरणमयमि"-तिपाठे "दाण्डिनायने"-( पा० ६।५।७४ ) त्यादिना निपातोबोध्यः ॥ जातरूपं सुवर्णम् ।

( २ ) अत्राधितिष्ठत्यस्मिन्नित्यधिकरणे ल्युट्प्रत्ययः ।

प्रग्रहे रश्मौ" इत्यमरः । आयच्छेदायतान्कुर्यात् "ॐ कृशानो सव्याना-यच्छ" इति यजुषा ॥ १२ ॥

"दासे"ति दक्षिणानवगृह्णीयात् ॥ १३ ॥

अभीशूनिति वर्त्तते । रथस्य दक्षिणयोरश्वयोरश्मीन् "ॐ दासानो दक्षिणानवगृहाणे"त्यनेन यजुषाऽवगृह्णीयात् ॥ १३ ॥

अवरुह्य सकृद्वारुणमुक्त्वा यथादैवतमादिश्योपरिष्टात् जपं जपेदिति गौतमः ॥ १४ ॥

अवरुह्य रथादवतीर्य वारुणं "वरुणस्त्वा नयतु देवि दक्षिणे" इत्येतं वरुणदैवतमन्त्रं बहुवचनान्तेनोहेन सकृदुक्त्वा यथा दैवतमश्वांश्च रथ-श्चादिश्य "तेनामृतत्वमशीय" इत्युपरिष्टाज्जपमूहेन सकृद् ब्रूयात् । तद्य-था "ॐ वरुणोवो नयतु देव्योदक्षिणा वरुणायाश्वानुत्तानाङ्गिरसाय रथन्तैरमृतत्वमशीय" इति गौतम आचार्य आह ॥ १४ ॥

सम्मार्ज्जनप्रभृत्येतत्सर्वङ्कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टा-ज्जपौ वारुणमश्वेभ्योरथाय चेति धानञ्जप्यः (य्यः) ॥ १५ ॥

अश्वसम्मार्जनप्रभृत्येतत्सर्वमवरोहणान्तं कर्म कृत्वा रथादश्वान्वि-मुच्य नाना पृथगेव ( एकैकस्मिन्द्रव्ये ) पुरस्ताज्जपौ भवेतां वारुणन्तु यजुः मन्त्रत्रयमश्वेभ्योरथाय च कार्यन्न तन्त्रेणेति धानञ्जप्य आ-चार्य आह ॥ १५ ॥

ग्लायेच्चेद्यथासनं वैतत्सर्वञ्जपेत् ॥ १६ ॥

प्रतिग्रहीता ग्लायेच्चेत् एतत्कर्म यथादेशं कर्त्तुमक्षमश्चेद्भवति तत्तदा यथासनं सदस्येवौदुम्बर्यामासीन एव सर्वमश्वनामप्रभृति मन्त्रान् जपेदित्यर्थः ॥ १६ ॥

पृष्ठ्यश्चेद्द्यात्प्राग्वारुणादश्वनामानि जपेत् ॥ १७ ॥

पृष्ठे साधुः पृष्ठ्यः पृष्ठेन वहने शिक्षित इत्यर्थस्तञ्चेद्द्याद्यजमानः । तदावारुणात्प्राक् "वरुणस्त्वानयतु" इत्यतः प्रागश्वनामानि जपेत् ॥ द्विविधोह्यश्वः पृष्ठे दान्तोवहने दान्तश्चेति । तथा चापस्तम्बः "मातृ-मन्तं पितृमन्तं पृष्ठे वहे(१) चदान्तम्" इति (अश्वदानप्रकरणीयम् )॥१७॥

पुरस्ताज्जपाद्वा ॥ १८ ॥

प्रागिति प्रकृतम् ॥ १८ ॥

तथाऽदान्तेषु ॥ १९ ॥

---

( १ ) स्कन्धे ॥

अदान्तेष्वशिक्षितेष्वश्वेषु यथापृष्ठ्ये तथैवाश्वनाम्नां जपः कार्य इत्यर्थः ॥ १९ ॥

यद्रथ्यं स्यात्तेन तत्प्रतिगृह्णीयात् ॥ २० ॥

यद्रथगतं व्रीहिय(१)वादिकन्तत्सर्वं तेन रथमन्त्रेणैव प्रतिगृह्णीयात् । रथप्रतिग्रहेण तदपि प्रतिगृहीतम्भवति । न पृथक् प्रतिग्रहः कार्य इत्यर्थः ॥ २० ॥

"अन्नस्ये"-ति प्राग्वारुणादवेः ॥ २१ ॥

अवेर्म्मेषस्य । तथाच विश्वप्रकाशः "अविःशैले रवौ मेषे भवेन्मूषिककम्बले" इति । प्रतिग्रहे क्रियमाणे "वारुणात् वरुणस्त्वा नयतु देवी" त्यतः प्राक् "अन्नस्यान्नपतिः" इति मन्त्रं जपेदित्यर्थः । मन्त्रोयथा—"ॐ अन्नस्यान्नपतिः प्रादादनमीवस्य शुष्मिणोनमो विश्वजनस्य क्षामाय भुञ्जति मा मा हिꣳसीः" इति ॥ २१ ॥

पुरस्ताज्जपाद्वा ॥ २२ ॥

वारुणाद्वा प्राक्पुरस्ताज्जपाद्वा ॥ २२ ॥

"ग्नास्त्वाऽकृन्तन्" इति वसनस्य ॥ २३ ॥

वसनस्य वस्त्रस्य प्रतिग्रहे "ग्नास्त्वाऽकृन्तन्" इतिमन्त्रं प्राग्वारुणाज्जपेत् । पुरस्ताज्जपाद्वा ॥ मन्त्रोयथा-"ॐ ग्नास्त्वाऽकृन्तन्नपसोऽतन्वत वयित्र्योऽवयन्" इति ॥ २३ ॥

तदुदस्येदतान्तवे ॥ २४ ॥

अतान्तवे—कार्पासतन्तुविकारादन्यस्मिन् वस्त्रे वाल्कलादौ तद् "ग्नास्त्वे"ति यजुरुदस्येदुत्क्षिपेत् । न जपेदित्यर्थः ॥ २४ ॥

हिरण्यमल्पीयो भोगादागच्छेदौदुम्बर्यामाश्लेषयेत् ॥ २५ ॥

उपभोगायापर्याप्तं हिरण्यमेकमानन्द्विमानं वाऽऽगच्छेत् (प्रतिग्रहे) चेत्तदा तत्सदसः स्थूणायामौदुम्बर्यामाश्लेषयेद्बद्ध्वा स्थापयेत् ॥ २५ ॥

आग्नीध्रीये वा जुहुयात् ॥ २६ ॥

तूष्णीमाग्नीध्रीयमग्निमुद्दिश्य जुहुयात्-त्यजेत् ॥ २६ ॥

समस्तान्व्रीहियवानेकक्रतौ प्रतिगृह्णीयात् ॥ २७ ॥

ये व्रीहयोयवाश्च एकस्मिन्क्रतौ स्युरेककाले पृथक् वा दत्तास्तान्

---

(१) रथ्यं चर्मण्यादि यद्द्रव्यमिति स्वामिनः । अत्र धन्वी-यत्पूर्वमुक्तं "वायोरिति चर्मण्ये प्रतिगृह्णीयात्" इत्यादि । तदपृथग्भूते रथावयवे मन्त्रविशेषविधायकमत्र तु पृथग्भूतव्रीहियवादिकं रथ्यमित्युच्यते इति । अत्र साध्वर्थे यत् ॥

उभयान्समस्तान् समस्यवा तन्त्रेण "प्रजापतये व्रीहियवान्"इति मन्त्रेण प्रतिगृह्णीयान्न पृथक् पृथक् "प्रजापतयेयवान्" इत्येवम् । यत्र तु व्रीहियवयोरेक एव दीयते तत्र मन्त्रोव्यत्यासेन प्रयोज्यः । एकक्रताविति वचनं क्रतुभेदेन दत्तानां व्रीहियवानां समस्य प्रतिग्रहनिवृत्त्यर्थमिति ॥ २७ ॥

तथा तिलमाषान् ॥ २८ ॥

तथा—तिलमाषानपि "क्षेत्रपतये तिलमाषान्" इति मन्त्रेण समस्यैव प्रतिगृह्णीयान्न पृथक् ॥ २८ ॥

प्राजापत्येनानाऽऽदिष्टदेवताः प्रतिगृह्णीयात् ॥ २९ ॥

अनादिष्टदेवता दक्षिणा गर्द्दभादिकाः प्राजापत्येन "प्रजापतये गर्द्दभम्" "प्रजापतयेमहि(१)षम्" इत्येवमादिभिर्मन्त्रैः प्रतिगृह्णीयात् ॥ २९ ॥

तूष्णीमयज्ञे दक्षिणा इति धानञ्जप्यः ॥ ३० ॥

अयज्ञे श्रौताग्निसम्बद्धं यत्कर्म स यज्ञस्तस्मादन्यत्र स्मार्तादिषु तूष्णीमेव दक्षिणाप्रतिग्रह इति धानञ्जप्य आह । तथा चापस्तम्बः "तद्द्मे तास्तन्त्राणां दक्षिणानां प्रतिग्रहणाः स्युरि"ति ॥ ३० ॥

"भूर्भुवःस्वरि"ति गौतमः ॥ ३१ ॥

"भूर्भुवःस्वरि"त्यनेनैव प्राजापत्येन मन्त्रेण स्मार्त्तादौ प्रतिग्रह इति गौतम अचार्य आह ॥ ३१ ॥

"ओमि"ति वो"मि"ति वा ॥ ३२ ॥

प्रणवेनैव वा(२) प्रतिगृह्णीयात्सोपि प्राजापत्य एवेति गौतमस्य मतमन्तेऽभ्यासः पटलसमाप्तिद्योतकः ॥ ३२ ॥

इति द्वितीयस्याष्टमी कण्डिका ॥ २ ॥ ८ ॥*॥

( इति पञ्चमः पटलः )

---

( १ ) वस्तुतोमहिषस्य यमोदेवता विष्णुधर्मोत्तर उक्त इति तन्नाम्नैव प्रतिग्रहोयुक्तः ॥ धन्विना त्वित्थमुक्तम् ॥

( २ ) तथाच मनुः "अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च" इति ॥

अथनवमी कण्डिका —

दक्षिणाप्रतिग्रहविधानमुक्तं साम्प्रतं पृष्ठस्योपाकरणन्तत्सम्बन्धि प्रस्तोतृकर्मोच्यते—

पूर्वं नाराशंसम्भक्षयित्वाऽऽहवनीये प्रस्तोता पृष्ठहोमं जुहुयात् । यत्पृष्ठꣳस्यात्तदादिश्या—"दः पिबतु सौम्यं मध्वायुर्दधद्यज्ञपतावविहुतमिमं यज्ञमभिसम्वसाना होत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहे" ति पूर्वम् ॥ १ ॥

मरुत्वतीयशस्त्रानन्तरं माध्यन्दिने द्वौ नाराशंसौ तयोः पूर्वम्प्रथमं ( नाराशंसं ) भक्षयित्वा ( तस्याप्यायनञ्च कृत्वा ) प्रस्तोता होतृमैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीध्रीयमाहवनीयङ्गत्वा "अदःपिबतु" इति मन्त्रेण पूर्वमाहुतिं पृष्ठं होमं जुहुयात् । तस्मिन्नहनि यत्पृष्ठं स्यात्तदादिश्य । यथाऽद इति सर्वनामस्थाने रथन्तरमिति वृहदितीत्येवम् ॥ १ ॥

स्वाहान्तरेणोत्तरम् ॥ २ ॥

पूर्वां यथोक्तेन मन्त्रेण हुत्वोत्तरां केवलं "स्वाहे"ति कृत्वा जुहुयादाहुतिम् ॥ २ ॥

द्वैधं जुहुयादिति धानञ्जप्यो "ऽदः पिबतु सौम्यं मध्वायुर्दधद्यज्ञपतावविहुतं स्वाहे"ति पूर्वां"मिमं यज्ञमि"त्युत्तराम् ॥ ३ ॥

द्वैधं द्विधा "द्वित्र्योश्चधमुञ्" (पा० ५।३।४५) इति प्रकारेऽर्थे धमुञ्प्रत्यय आदिवृद्धिः । "इमं यज्ञम्" इति मन्त्रखण्डेनोत्तरां जुहुयात् ॥ ३ ॥

होतृकपृष्ठेभ्य इति ॥ ४ ॥

तादर्थ्ये चतुर्थी "होतृकपृष्ठेभ्योवामदेव्यादिभ्य" इति होतृकैर्मैत्रावरुणादिभिर्वामदेव्यादीनामनुशंसनाद्धोतृकपृष्ठव्यपदेशः । चत्वारीति पृष्ठसामानि । तत्रहोतुः पृष्ठम्प्रथमम् होतृकपृष्ठार्थमेवमभिसम्बन्धं कृत्वेति सूत्रार्थः ॥ ४ ॥

"रेवतीषु वारवन्तीयमि"ति पृष्ठे पृष्ठादेशं गौतमो "महाव्रतमि"ति व्रते ॥ ५ ॥

पृष्ठ्यषडहस्य पृष्ठेऽहनि "रेवतीषु वारवन्तीयं पृष्ठम्भवति" इति ब्राह्मणम् । तेन "रेवतीषु(१) वारवन्तीयं पिबतु" इत्येवं पृष्ठादेशः कार्य

---

( १ ) निमित्तसप्तम्येषा रेवती साम्नि निमित्ते रेवतीसामार्थं वारवन्तीयं पिबत्वित्यर्थः । केचित्तु "वारवन्तीयद्वारेण रेवत्यः पिबन्तु" इत्यादेशवाक्यार्थं वर्णयन्ति ॥

इति गौतम आचार्यो मन्यते "महाव्रतं पिबत्वि"त्येवं व्रते इति च। गायत्रबृहद्रथन्तरराजनानां समुदायोमहाव्रतमित्युच्यते ॥ ५ ॥

**रेवत्यश्च वारवन्तीयश्चेति धानञ्जप्योयावन्ति पृष्ठस्थानि स्युः सर्वाण्येव प्रसञ्चक्षीत "पिबतु" "दधदि"ति च यथार्थमूहेत् ॥ ६ ॥**

यद्यपि रैवतीसामैव स्वयोनिमुखेन पृष्ठं तथापि वारयन्तीयमपि साक्षाच्चत्र भवतीति द्वयमप्यादेष्टव्यमिति धानञ्जप्यमतम्। यावन्ति पृष्ठस्तुतौ सामानि भवन्ति तानि सर्वाणि स्वरूपेणैव प्रसञ्चक्षीत तेषां प्रसंख्यानङ्कुर्यात् तान् निर्द्दिशेत्। यथा आप्तार्यामे गर्भकारस्नपने "बृहद्वैराजे पिबताम्" इति ॥ अत्र स्वामिनः। रेवत्यश्च वारयन्तीयञ्चेत्येवं पृष्ठेऽहनि पृष्ठादेशं धानञ्जप्योमन्यते। यावन्ति सामानि महाव्रते पृष्ठस्थानि भवन्ति सर्वेषामेव परिसङ्ख्यानङ्कुर्यात्। तथा "पिबतु" "दधदि"ति चैते पदे यथार्थं यथावचनमूहेत्। प्रयोगस्तु—"रेवत्यश्च वारयन्तीयं च पिबतं सौम्यं मध्वायुर्द्दधती" इति। शेषोमन्त्रः सामान्यः। एवं पृष्ठे "गायत्ररथन्तरबृहद्राजनभद्राणि पिबतु सौम्यं मध्वायुर्दधति दधन्तीति वे"त्येवं महाव्रते। मन्त्रशेषः सामान्य एवेत्युक्तम्। उभयपक्षेणाम्नातं भद्रे पुच्छे यज्ञायज्ञीये च पुच्छे यथार्थं न केवलमेवं पृष्ठमहाव्रतयोर्यत्र यत्रानेकसामपृष्ठता तत्र तत्रैवमर्थसमत्वादिति ॥ ६ ॥

**बृहता रथन्तरेण वा स्तोष्यमाणः प्राक्सोमयोगाद्दशव्याहृतीर्मनसा ध्याये–"दैरमि"ति॥ ७ ॥**

बृहता रथान्तरेण वा स्तोष्यमाणः स्तोतुमिच्छन्नुद्गाता स्तोमयोगात्पूर्वं दश व्याहृतीर्मनसा ध्याये–"दैरमि"त्येतदाद्याः। अयमर्थः। "ऐरंबृहदैडंरथन्तरमि"त्यादि—"असौ वै लोकोबृहदयं रथन्तरमि"त्येवमन्तं ब्राह्मणपठिता दश व्याहृतयः। तत्र रथन्तरस्य पञ्च व्याहृतयोबृहतः पञ्च उभयोरपि व्यतिषक्तास्ताः सर्वा अप्युभयोर्गाने मनसा ध्यायेदिति ॥ ७ ॥

**रथन्तर एवर्चं "यस्तेगोष्वि"ति ॥ ८ ॥**

"यस्तेगोषु" इति ऋचं रथन्तरगान एव व्याहृत्यनन्तरं ब्रूयादित्यर्थः॥ अत्र स्वामिनः। रथन्तर एव केवले ऋचं ध्यायेत्। "यस्तेगोष्वि"त्येताम्। एवशब्दोऽन्यत्र प्रयुक्ते रथन्तरे मा भूदिति। ऋचमिति संव्यवहारार्थमेव "ऋचं पूर्वं व्याहृति(१)भ्य" इति ॥ ८ ॥

---

(१) व्याहृतिभ्योऽनन्तरम्पूर्वं पूर्वमृचं पश्चाद्रथन्तरमित्युक्तब्राह्मणवचनार्थः॥

युक्त्वा स्तोममेतद्ब्रूयादिति शाण्डिल्य ऋचं पूर्वं व्याहृतिभ्य इति ॥९॥

युक्त्वा स्तोमं स्तोमयोगानन्तरं "यस्तेगोषु"इत्येतद्ब्रूयात् । तत्रापि व्याहृतिभ्यः पूर्वमेवर्चं ब्रूयात्तत उत्तरं व्याहृतीर्मनसैवेति शाण्डिल्य आह ॥ ९ ॥

इतरद्ध्यानजप्यम् ॥ १० ॥

इतरत्पूर्वोक्तन्ध्यानजप्यं मतम् ॥ १० ॥

रथन्तरे प्रस्तूयमाने सर्वत्र सम्मीलयेत् ॥ ११ ॥

सर्वत्र सर्वासु स्तोत्रीयासु रथन्तरे साम्नि प्रस्तूयमाने सम्मीलनमुद्गात्रा कार्यम् । "ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः प्रमथितः (१)प्रस्तूयमाने सम्मीलेत्स्वर्दृशं प्रतिवीक्षेत ।" इति हि ब्राह्मणं प्रथमायामृचि अस्य विधेः क्रियां विदधातीति तत्रैव मा भूदिति सर्वत्रेति ॥ ११ ॥

एकैकं मनसाक्षरं स्तोभैर्वाचासंयुञ्ज्यात्प्रथमस्वरैरकारैर्भकारादिभिरक्रान्तैर्द्वितीयस्वरोत्तमैः ॥ १२ ॥

प्रस्तावानन्तरमेकैकमुद्गीथाक्षरमार्चिकं मनसा स्मरन् तत्तत्स्थाने वाचोच्चार्यमाणैः स्तोभैर्युगपदेव संयुञ्ज्यात् । कीदृशैः स्तोभैः ? प्रथमस्वरैरकारैरुपलक्षितैर्भकारैर्'भ'"भे"त्येवंरूपैः । अक्रान्तैरसङ्क्रान्तैरविलम्बितैरित्यर्थः । द्वितीयस्वरोत्तमैः यस्तेषामुत्तमोवर्णस्स द्वितीयेन स्वरेणोपलक्षितः स्यात् । अत्र सर्वत्रोपलक्षणे तृतीया (पा० २।३।२१)॥१२॥

एतद्यथाधीतमित्याचक्षते ॥ १३ ॥

एवं प्रयुज्यमानं रथन्तरं यथाधीतं प्रयुक्तं भवतीति एवमाचक्षते । एतच्छ्रुत्यनन्तरं यथाधीतं प्रयोक्तव्यमिति । विशेषोऽत्र स्वामिभाष्ये द्रष्टव्यः ॥ १३ ॥

प्राक्प्रतिहाराच्चतुरक्षरंशिष्ट्वा तत्सर्वत्र प्रतिवीक्षेत ॥ १४ ॥

प्राक्प्रतिहारभक्तेश्चतुरक्षरं शिष्ट्वा ततः पूर्वमेव स्तोमप्रयोग इत्यर्थः । तच्चतुरक्षरं गीयमानं प्रतिवीक्षेत तदानीं सम्मीलनं कार्यमित्यर्थः ॥ "स्वर्दृशं प्रतिवीक्षेत" इत्युत्तरयोरप्युपलक्षणमिति दर्शयितुं सर्वत्रेति वचनम् ॥ १४ ॥

---

(१) अत्रामः सुभावः (पा० ७।१।३९) सामसु रथन्तरमीश्वरं सर्वतः श्रेष्ठमिति तदुद्दृश्यमान (स्पश्यतोच्चार्यमाण) श्चक्षुरुद्गातुः प्रमथितं विनष्टं कुर्यादिति तस्मिन्प्रस्तूयमाने उद्गाता स्वर्दृशं सम्मीलेन्निमीलेत्पश्चात्पश्चात्प्रतिवीक्षेतेत्यर्थः ॥

स्तुत्वा वरञ्चोदयेत् ॥ १५ ॥

रथन्तरेण स्तुत्वा यजमानं वरं दातुं चोदयेत्प्रेरयेत् "वरोमे देय" इति ॥ १५ ॥

तस्यापृष्ठस्य सतोनिवर्त्तेरन्धर्माः ॥ १६ ॥

तस्य रथन्तरस्य अपृष्ठस्य पृष्ठादन्यत्र पवमानादौ सतः स्थितस्य ब्राह्मणोक्ता धर्माः पृष्ठहोमादयोवरचोदनान्ताः निवर्त्तेरन् न कार्या इत्यर्थः। तथाब्राह्मणोक्ताश्च धर्माः "वागित्यादेयं" "क्षिप्रं देयम्" एवमादयोन स्युः। पृष्ठगतस्य तु गुणभूतस्यापि सतोनैव निवर्त्तेरन् धर्मास्तथा बृहत इति स्वामिनः ॥ १६ ॥

सह स्तोभैरिति गौतमः ॥ १७ ॥

तस्योक्तरूपस्य स्तोभैः सह धर्माः पृष्ठहोमादयोवरदानान्ता न कार्या इति गौतम आह ॥ १७ ॥

स्तोभा एवान्वियुरिति धानञ्जप्यः ॥ १८ ॥

पृष्ठादन्यत्र स्तोभा एव अन्वियुः। प्रवर्त्तेरन्। अन्ये निवर्त्तेरन्निति धानञ्जप्य आह ॥ १८ ॥

अग्निष्टोमसामसन्धिसाम्नोरेवापृष्ठं स्तोभेदिति शाण्डिल्यः ॥१९॥

अपृष्ठभूतं रथन्तरमग्निष्टोमसाम यदा स्यात्सन्धिसाम वा तदैव स्तोभेत् न पवमानगतमिति शाण्डिल्य आह ॥ १९ ॥

सर्वत्रास्वस्तोत्रीयं न स्तोभेदिति स्थविरोगौतमः ॥ २० ॥

सर्वत्र पृष्ठस्थानेऽतोन्यत्रापि अस्वस्तोत्रीयं स्वस्तोत्रीयविधुरं रथन्तरं न स्तोभेदिति स्थविरोवृद्धोगौतमः। तन्मते "कयानश्चित्रआभुवत्" इत्येतासु पृष्ठस्थानेऽपि रथन्तरस्य स्तोभनिवृत्तिरिति भावः ॥ २० ॥

इति द्वितीयस्य नवमी कण्डिका ॥ २ ॥ ९ ॥*॥

---

## अथ दशमी कण्डिका।

वामदेव्येन स्तोष्यमाणः प्राक्स्तोमयोगा "द्गावोअश्वा अजाऽवयोव्रीहयोयवा" इति मनसा ध्यायेत् ॥ १ ॥

बृहद्रथन्तरयोः सामान्यविशेषधर्माश्चोक्ताः साम्प्रतं वामदेव्यधर्मान्विवक्षितानाह–वामदेव्येनेति। वामदेव्येन साम्ना स्तोष्यमाणः स्तौतुमिच्छन्प्राक् पूर्वं स्तोमयोगात्, "गावोअश्वा" इति मन्त्रं मनसा ध्यायेत् ॥ अत्र "प्रकृत्याऽन्तः पदमव्यपरे" (पा० ६।१।११५) इति प्रकृतिभावः ॥ १ ॥

ब्रह्मसाम्नि यः कामो यजमानस्य स्यात्म "सिध्यत्विति" ध्यायन्नुपासीत ॥ २ ॥

ब्राह्मणाच्छंसी यत्सामानुशंसति तद्ब्रह्मसाम । तृतीयं पृष्ठं "नौध-सं" श्यैतादि तस्मिन्गीयमाने "यजमानस्याभिलषितं सिध्यतु" इत्यु-पासीत ॥ २ ॥

तथेतर उद्गायन् ॥ ३ ॥

तथा इतर उद्गाता "यजमानस्य कामः सिध्यतु" इत्येवन्ध्यायन्नु-द्गायेत् ॥ ३ ॥

आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डन्त्रीँस्त्रीन्वाऽपरया द्वारा हविर्द्धानं प्रपद्याधस्तात् स्वयं चमसस्य कुर्युर्यदासन्नः स्या-"दत्र पितरो मादयध्वं यथाभागमावृषायध्वमि"ति ॥ ४ ॥

तृतीयसवन आर्भवेण पवमानेन स्तुत्वा नाराशंश–सादनादनन्तर-मुत्थाय पुरोडाशात्तार्त्तीयसवनादेकैकं शकलं त्रींस्त्रीन्वा गृहीत्वाऽपरया पश्चिमया द्वारा हविर्द्धानं प्रपद्य प्रविश्य स्वस्वचमसस्याधस्तात्स-मीपे दर्भेषु पिण्डान्निवपेयुर्यदा (१)सन्नः स्यादिति । यदा स्वीयश्चमसो भक्षणानन्तरं हविर्द्धाने सन्नः सादितः स्यात्तदेत्यर्थः । पिण्डान्निधाय च "अत्रपितर" इति मन्त्रं जपेयुः ॥ ४ ॥

तमाह्रियमाणं प्रतिमन्त्रयेर–"न्नमीमदन्त पितरो यथाभागमा वृषायिषते"ति ॥ ५ ॥

तं नाराशंसं स्वीयञ्चमसं भक्षणायाह्रियमाणं प्रतिमन्त्रयेरन् "अमी-मदन्ते"ति मन्त्रेण ॥ ५ ॥

सौम्यमाहृतमुद्गाताऽवेक्षेता–"युर्मेप्राण" इति ॥ ६ ॥

सौम्य(२)श्चमसमध्वर्युभिराहृतमुद्गाताऽवेक्षेत "आयुर्मेप्राण" इत्येत-दादिना यजुषा । मन्त्रो यथा–"ॐ आयुर्म्मे प्राणो मनसि मे प्राण आयुप-त्यामृचि यन्मे मनो यमङ्गतं यद्वा मे अपरागतँ राज्ञा सोमेन तद्वयं पुनरस्मासु दध्मसि" इति ॥ ६ ॥

"पुनरस्मासु दध्मसी"त्यन्तः ॥ ७ ॥

---

(१) "पितृदानं निवापः स्यादि"–त्यमरः ॥

(२) अत्र सोमो देवताऽस्येत्यर्थे "सोमाट्ट्यण्" (पा० ४।२।३०) इति ट्यण्प्रत्ययः । आदिवृद्धिः । (पा० ७।२।११७) ॥

"आयुर्मे प्राणे" इति मन्त्रस्य "पुनरस्मासु दध्मसी" त्यवसानं भवति। ननु—"स्वरादिः पूर्वान्तलक्षणम्" (१।१।३) इति विज्ञायमाने मन्त्रान्ते किमर्थं मन्त्रान्तोपादानम्? उत्तरसूत्रे तच्छब्देन तावन्मात्रपरामर्शार्थम् ॥७॥

तं दशमेऽहन्यभ्यस्येयुः ॥ ८ ॥

तमवेक्षणमन्त्रस्यान्तं "पुनरस्मासु दध्मसि" इति दशमेऽहनि अभ्यस्येयुः। द्विब्रूयुः। प्रत्यक्षानुष्टुप्त्वनिवृत्त्यर्थम्। "दशमेऽहनि परोक्षमनुष्टुभमुपयन्ति। यत्प्रत्यक्षमुपेयुः प्रजापतिमृच्छेयुः" इति ब्राह्मणात्प्रत्यक्षानुष्टुभोवर्जनीयत्वात् ॥ ८ ॥

"यन्मे यममि" त्येके ॥ ९ ॥

"आयुर्मे प्राणे" (१) इत्येतस्य प्राणमन्त्रस्य स्थाने "यन्मे यममि" त्येके आचार्या मन्यन्ते ॥ मन्त्रो यथा—"ॐयन्मे यमं वैवस्वतं मनोजगाम दूरगास्तन्म आवर्त्तया पुनर्जीवातवे न मर्त्तवेऽथो अरिष्टतातये" इति ॥ ९ ॥

पूर्वेण त्वेवावेक्षेत ॥ १० ॥

तुशब्दः पूर्वमतनिरासार्थः। एवकारोभिन्नक्रमः। पूर्वेणैव तु। यदेतत्पूर्वमुक्तमवेक्षणे यजुस्तेनैवावेक्षेत न द्वितीयेन ॥ १० ॥

तस्मिन्नङ्गुष्ठानामिके अवधायाक्षिणी विमार्ज्जीत "येनाह्याजिम्" ॥ ११ ॥

तस्मिन् सौम्ये चरौ अङ्गुष्ठानामिके अङ्गुल्यौ अवधाय धृत्वा ताभ्यामक्षिणी विमार्ज्जीत विमृशेत् "येनाह्याजिम्" इत्येतदादिना यजुषा। तस्मिन् ग्रहणं यदि पूर्वेण यदि वोत्तरेणावेक्षेत कुर्यादेवैतदिति बोधनाय। मन्त्रो यथा—"ॐयेनाह्याजिमजयद्विचक्ष्य येन श्येनꣳ शकुनꣳ सुपर्णं यदाहुश्चक्षुरदितावनन्तꣳ सोमोनृचक्षा मयि तद्दधातु" इति ॥ ११ ॥

एवमितरौ कुर्याताम् ॥ १२ ॥

एवमनेन विधानेनावेक्षणमक्षिमार्जनञ्चेतरौ प्रष्ठी अध्वर्युप्रस्तोतारौ कुर्याताम् ॥ १२ ॥

प्रतिहर्त्ता पश्चात् ॥ १३ ॥

एष क्रमः प्रस्तोता पूर्वः पश्चात्प्रतिहर्त्ता ॥ १३ ॥

---

(१) अत्र द्राह्यायणीये "यन्मेमादेः स्थाने" इत्यधिकम् पुरस्तात्पठ्यते। अत्र धन्वी "दशमेऽहनीत्यनुवर्त्तते दशमेऽहनि "यन्मेमनोयमं गतम्" इति पूर्वमन्त्रस्य स्थाने "यन्मे यमं वैवस्वतम्" इत्येवं कुर्यात्। न विकल्पः कार्य इत्येके। कुतः उत्तरोहि मन्त्रः स्वरूपत एवानुष्टुब्न भवति। पञ्चपदत्वात्। पूर्वस्तु स्वरूपतोऽनुष्टुप्। स किमर्थमभ्यसिनान्यथाकृत्य प्रयुज्यत इती"ति व्याख्यत्।

तमुत्तरेण प्रतिहर्त्तारं हरेयुः ॥ १४ ॥

तमवेक्षितं सौम्यं चरुम्प्रतिहर्त्तुरुत्तरेण हरेयुः। हृत्वा च पश्चिमया द्वारा निष्क्रामेयुः । यदि वा(१) ब्राह्मणोक्तेन विधिना प्राश्नीयाद्दक्षिणार्द्ध(२) सदसोगत्वैनं सौम्यातिशेषं प्राश्नीयादित्यग्निस्वामिनः प्राहुः१४

यज्ञायज्ञीयस्य हिङ्कारं प्रति पत्नीमुद्गातेक्षेत ॥ १५ ॥

अथ यज्ञायज्ञीयस्तुतिकाले सामावयवभूतं हिङ्कारं प्रति उद्गाता पत्नीम् यजमानस्य, ईक्षेत। पत्नी चोद्गातारम् न पुनः पर्यायादिभूतं हिङ्कारं प्रति । तथाच ब्राह्मणं हिङ्कारमुपक्रम्य "आतृतीयायाः सङ्ख्यापयन्ति" इति । तिसृषु स्तोत्रीयासु तत्र ( हिङ्कारे ) वीक्षणविधानात् । सङ्ख्यापयन्ति संज्ञापयन्ति(३) पत्न्याः समीक्षणम् ॥ १५ ॥

निधनं प्रतिपत्नी दक्षिणमूरुमभिषिञ्चेत् ॥ १६ ॥

निधनं प्रति निधने उच्यमाने पत्नी (४)पात्रेऽञ्जलिभिरद्भिः स्वन्दक्षिणमूरुमभिषिञ्चेत् । "तद्दक्षिणानूरूनभिषिञ्चन्ते" इति हि ब्राह्मणम् १६॥

तृतीयायां स्तोत्रीयायां प्रस्तुतायां सर्वन्तदुदकन्निनयेत् ॥ १७ ॥

प्रथमे (५)पर्याये "यज्ञा यज्ञा वोऽग्नये" इत्यस्यामृच (६)स्तृतीयाभ्यास इत्यर्थः । पत्नीसर्वन्तदुदकं स्वस्मिन्नूरौ निनयेत् । सर्वशब्दोनिरवशेषवाची ॥ १७ ॥

---

( १ ) अत्र द्राह्यायणीये—"द्रव्येप्सुर्भुञ्जीतैनं गच्छत्यन्तरा रोगार्त्तोवाऽहतेन वाससा प्रच्छाद्य दक्षिणार्द्ध सदसोगत्वा १४ यज्ञायज्ञीयस्येत्यादि १५ सूत्रं पठ्यते । तस्यायमर्थः । यदि अर्थलिप्सुरुद्गाता स्यात्तदैनञ्चरुं भुञ्जीत । रोगार्त्तोवा भुञ्जीत । येनासावन्यतराङ्गतिङ्गच्छेदरोगोवा स्यान्म्रियते वा येन पुनर्न व्याधिनाऽभिभूयेतेति । उभयोरपि सदसोः दक्षिणार्द्धङ्गत्वाऽहतेन वाससा प्रच्छाद्य भोजनं, यथान्योन पश्यतीति च ॥

( २ ) प्राशनप्रवेशमाह दक्षिणार्द्धमित्यादिना । एष एव ब्राह्मणोक्तोविधिस्तथाच ब्राह्मणं "द्रव्येप्सुरित्या"दि पूर्वोक्तम् ॥

( ३ ) सम्पूर्वः ख्यातिर्ज्ञाने वर्त्तते । "यथासंख्यमनुदेशः समानाम्"(पा० १।३।१०) इत्यत्र यथा । स्तोतारः कर्त्तारोऽत्र ॥

( ४ ) अवस्थिताभिरद्भिरञ्जल्यवच्छिन्नाभिरित्यर्थः । अवच्छेदकत्वलक्षणविषयत्व सप्तम्यर्थः ।

( ५ ) सप्तऋचामावृत्तित्रयेणैकविंशतिकृत्वोऽभ्यासोऽभिधीयते तत्र त्रयः पर्याया भवन्तीति ।

( ६ ) अत्र स्वामिनः । उत्पत्तिस्तोत्रीयायामुत कर्म्मस्तोत्रीयायामिति विवदन्ते । तृतीयाशब्देन कर्म्मस्तोत्रीयान्न्याय्यतरमिति ॥

उत्तमायां स्तोत्रीयायां "भुवद्वाजाायि भुवद्वाजेषु" इत्यभ्यस्येत् "नामि"तिच निधनम् "अनुष्टुभमुत्तमाम्" "अक्षरेणान्तत" इतिह्याहेति १८

एकविंशतिकृत्वोयज्ञायज्ञीयमभ्यस्यते तत्रस्तोत्रस्योत्तमायाम् अन्त्यायां स्तोत्रीयायामेकविंशतितमेऽभ्यास इति यावत्। "भुवद्वाज" इति चतुरक्षरमभ्यस्येत् । अनुष्टुप्त्वसिद्ध्यर्थम् । अत्र (चतुरक्षराभ्यासे) "उत त्राता तनूनाम्" इति ऋगन्तमक्षरं 'नामि'त्येतन्निधनङ्कुर्यात्। न पुनर्यथाधीतं वाङ्निधनम्। उभयत्रापि प्रमाणमाह-"अनुष्टुभमुत्तमामि"ति । अस्य "सम्पादयती"ति(१) शेषः । एवम्" अक्षरेणान्तत" इति । सार्वविभक्तिकोऽत्र तसिः । ऋगन्ते स्थितेन नामित्यक्षरेणेत्यर्थः । अस्य "प्रतिष्ठाप्यम्"(२) इति शेषः । इति च ब्राह्मणमाह--हि यतोऽत इत्यर्थः ॥ १८ ॥

अनभ्यासन्त्वाचार्याः । निधनञ्च यथाम्नायᳬशाण्डिल्यः ॥१९॥

तुशब्दः पक्षनिवृत्त्यर्थः । चतुरक्षरस्यानभ्यासमेवाचार्या मन्यन्ते । तथाचाभ्यासमकृत्वा यथाधीतमेव गायेत् । "यज्ञावो अग्नये" इति । निधनञ्च यथाम्नायं वागन्तमेव कुर्युरित्येवं शाण्डिल्य आचार्यो(३)म-

---

(१) द्वादशस्तोत्रेषूत्तमां स्तोत्रगतां "यज्ञावोऽग्नये" इत्येतामृचं यज्ञापदस्याभ्यासेनाष्टाक्षरमनुष्टुभमृत्विक्सम्पादयेदिति ब्राह्मणवाक्यार्थः । अयम्भावः । "इतोवै प्रातरूर्ध्वानि छन्दांᳬसि" इत्युपक्रम्य "अनुष्टुभमुत्तमां सम्पादयती"ति ब्राह्मण "गायत्रं प्रातः सवनं त्रैष्टुभ माध्यन्दिनं सवनं, जागतं तृतीयं सवनमि"ति स्थितौ उत्तमायां स्तोत्रीयायां प्रातः सवनादारभ्यारूढानां छन्दसांयज्ञायज्ञीयस्तोत्रे प्रथमायामृचि प्रत्यवरोहादुत्तमायाश्चानुष्टुप्त्वसम्पादनादस्मिँल्लोके यजमानःप्रतिष्ठितोभवति। इतरथा छन्दसामारोहात्स्वर्ग एव स्थितः स्यान्नेमं लोकमागच्छेदिति ।

(२) अयमर्थः "अस्य वै यज्ञा वागन्ता भवन्ति" इत्युपक्रम्य "अक्षरेणान्ततः प्रतिष्ठाप्यम्" इत्येवमन्तं ब्राह्मणम् । यज्ञायज्ञीयस्य वाङ्निधनत्वात्तदन्तक्रतुर्वागन्तोभवेत् तदानीमनृतवदनायज्ञोनश्येत्। किं पुनरनृतम् ? गकाररहितवाशब्दप्रयोगः । वागितिप्रयोक्तव्येगकाररहितं वाशब्दं प्रयुञ्जानः शब्दानृतङ्करोति । तथाच किमनृतं किमक्षरमिति प्रस्तुत्य निदानकारः "गकारलोपं ब्राह्मणं क्षिपती"ति । तत्परिहारार्थं वागिति कृत्स्नमक्षरमन्ततः कार्यमिति एके मन्यन्ते । सूत्रकारस्तु-आर्चिकमेवान्त्यमक्षरमक्षरेणेत्युक्तं मन्यते। "अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौती"त्यादावक्षरशब्दस्यार्चिकविषयत्वादिति ॥

(३) "अक्षरेणान्ततः प्रतिष्ठाप्यम्" इत्यत्राक्षरशब्दः स्वरमाह । अष्टाक्षरं द्वादशाक्षरमित्यादौ स्वरैरेवाक्षरगणनात् । तेनायमर्थः । यद्यपि वागिति प्रयोक्तव्ये वा इत्युक्तौ गकारलोपादनृतापत्तिः। तथापि आकारेणाक्षरेणसमापनान्नासौ दोष इति ॥ यथा इडानिधने

न्यते । यद्यप्यनुष्टुप्त्वसम्पत्तिरेवमूनाक्षरे न भवति । तथापि-न वा एकेनाक्षरेण छन्दांऽसि वियन्ति न वा द्वाभ्याम्" इति श्रुतेरनुष्टुबेवेयमिति । अथवा वागिति निधनाक्षरेण सह द्वात्रिंशदक्षरा ॥ १९ ॥

तद्यदानुशंसन् होताऽऽपोहिष्ठीया ब्रूयात्तदैनमन्वालभेरन्नपावृण्वानाः २०

तत्-यज्ञायज्ञीयं स्तोत्रमनुशंसन्होता यदा आपोहिष्ठीया ऋचो ब्रूयात्तदा सर्व एवोद्गातारश्शिरः प्रावरणमपावृण्वानाः परिहरन्त एनं होतारमन्वालभेरन्स्पृशेयुः । अपावृण्वाना इति सर्वेषां ततः पूर्वं (१)प्रावृतानां स्तोत्रोपाकरणप्रभृतिक्रियां दर्शयति । उक्तञ्च "प्रावृतेनैवोद्गेयं वैश्वानरेणानभिदाहाये"ति ॥ २० ॥

अन्यस्थानगतस्य निवर्त्तेरन्धर्म्माः ॥ २१ ॥

अन्यस्थाने अग्निष्टोमस्तोत्रादन्यत्र पवमानादौ गतस्य यज्ञायज्ञीयस्य शिरः प्रावरणाद्योधर्मा निवर्त्तेरन् । ते हि स्तोत्रप्रयुक्ता धर्मा न सामप्रयुक्ता इत्यर्थः ॥ २१ ॥

यदन्यदग्निष्टोमसाम स्यात्तस्य स्युः ॥ २२ ॥

यत् यत्र यज्ञायज्ञीयादन्यद्बृहदाद्यग्निष्टोमसाम स्यात् तस्यापि पत्न्यवेक्षणशिरः प्रावणादिधर्माः स्युरित्यर्थः ॥ अत्राप्यर्थस्य तुशब्दस्योत्तरस्थस्यापकर्षो बोध्यः । यदित्यत्र सप्तम्या लुक् ( पा०७।१।३९ ) ॥ २२ ॥

अहिङ्कारे तु प्रतिहारवेलायां पत्नीमुद्गातेक्षेत ॥ २३ ॥

तुरप्यर्थः । तत्र अहिङ्कारे हिङ्काराभावेऽपि तत्तत्साम्नः प्रतिहारवेलायां पत्नीमुद्गाता ईक्षेत । पत्नी चोद्गातारम् ! अत्र धन्वी-सत्यपि हिङ्कारे तमनादृत्य प्रतिहारवेलायामवेक्षणं, प्रतिहारवेलायामिति वचनादिति ॥ २३ ॥

अनुब्राह्मणमार्चिकान्सन्नामान् सर्वत्र कुर्यादप्यन्यस्मिन्सान्नि ॥ २४ ॥

"येरं कृत्वोद्गेयम्" "पर्प्री वयमि'ति वक्तव्यम् "सुशंसिषमि"ति वक्तव्यम्' इत्येवमादिनाऽऽर्चिकान्सन्नामान् अनुब्राह्मणम् यथाब्राह्मणम्

---

सामन्यर्थेडाप्रयोगे सर्वथाऽनृतपरिहारोनास्ति व्यञ्जनेन समापनात् । नैवन्तत्र स्वरेणासमापनादिति यथाधीतमेव निधनं ब्राह्मणमभिनन्दतीति । तथा च निदानकारः-स्वरतन्त्राण्यक्षराणि भवन्ति स्वरान्ततामेवाक्षरस्येत्येतद्ब्राह्मणमेवमवोचदिति धन्विव्याख्यानम् ।

(१) अत्र "आकर्णाभ्यां प्रावृत्ये"ति वचनात्कर्णवर्ज्जं शिरोवेष्टनं धन्विकृते ब्राह्मणभाष्ये

अत्र यथार्थेऽव्ययीभावः (पा० २।१।६) सर्वत्र(१) पवमानगतेऽपि यज्ञायज्ञीये, न केवलं यज्ञायज्ञीये अन्यस्मिन्नथन्तरेऽपि साम्नि कुर्यात्। अत्राग्निस्वामिनः—अथ साम्नीति किमर्थम्? उच्यते—यदा रथन्तरेष्वृक्षु अन्यत् पृष्ठं क्रियते तदापि "अस्थुष" इति "सुस्थुष" इति वा सन्नामयेदिति ॥ अत्रापिरुत्तरत्र निधेयः ॥ २४ ॥

इति द्वितीयस्य दशमी कण्डिका ॥ २ ॥ १० ॥ * ॥

## अथ एकादशी कण्डिका।

**तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयु-"ऋतस्य त्वे"ति ॥ १ ॥**

तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु सोमचमसम् भक्षयित्वा "ऋतस्यत्वे"ति यजुषा स्तोमविमोचन(२)ङ्कुर्युः सर्वेऽप्युद्गातारः ॥ १ ॥

**दक्षिणैः पाणिभिः कुशाः संलोभयेयुः ॥ २ ॥**

ते (उद्गातारः) एव सर्वेऽपि स्तोमविमोचनानन्तरं संलोभनङ्कुशानां समाहरणमेकीकरणमिति यावत्। तत्कुर्युः। कुशा इति स्त्रीत्वमार्षम्। अत्र धन्वी "अनेनैतज्ज्ञायते प्रथमस्तोत्रे यत्र स्थाने या कुशा विहिता सैव तत्रावधार्य स्तोत्रान्तरेऽपि प्रयोज्येति" इति ॥ २ ॥

**यजमानवाचनानन्तरमत्र वा यजमानं वाचये-"त्तन्तवे मा ज्योतिषेत्यसावनुमातनु हि ज्योतिषे"ति यथाज्येष्ठं पुत्राणां नामानि गृह्णीयात् ॥ ३ ॥**

अत्र "प्रतियोजनमेके" इति द्राह्यायणीयेऽधिकमादौ पठ्यते। उपयुज्यते च स पाठः। प्रतिस्तोमयोगं प्रतिस्तोत्रमित्यर्थः। "स्तुतस्य स्तुतमसी"ति यजमानवाचनादनन्तरं स्तोमविमोचनं कुशासंलोभनञ्च कुर्यादित्येके मन्यते। अत्र वा—सर्वस्तोत्रसमाप्तौ वा यजमानवाचनादनन्तरं सोमभक्षणात् पूर्वमेव द्वयमपि कुर्यादित्यपरे। तेन विकल्पः।

---

(१) अत्र धन्वी-सर्वत्रेति वचनं रथन्तरादावपि "अस्थुष" इति वक्तव्यम् "सुस्थुष" इति वा इत्यादि ब्राह्मणोक्तविकारपरिग्रहार्थम्। अप्यन्यास्मिन्साम्नीति पृष्ठस्थाने अग्निष्टोमस्थाने च यद्यपि रथन्तरादेरन्यत्साम स्यात्तदापि विकारसिद्ध्यर्थं, तेनाग्निष्टोमस्तोत्रे "यज्ञा यज्ञा वो अग्नये" इत्यत्र सामान्तरगानेऽपि आर्चिकसन्नामसिद्धिः। स्थानप्रयुक्तः सन्नामो न सामप्रयुक्त इत्युक्तम्भवति ॥

(२) "ऋतस्य त्वे"ति मन्त्रजप एव स्तोमविमोकः। तत्र विमुञ्चामीति पदसमन्वयात् ॥

तृतीयसवने संलोभनानन्तरं "तन्तवे मा ज्योतिषा" इति यजमानं वाचयेत् ॥ "असावनुमातनुहि ज्योतिषा" इति यथाज्येष्ठं मन्त्रेण पुत्रानादिश्य यजमानं वाचयेत्। असावितिसर्वनामस्थाने नामानि पुत्राणां गृह्णीयात्। ज्येष्ठाननतिक्रम्य। यथार्थेऽव्ययीभावः। यथा "तन्तवे मा ज्योतिषा नारायणशर्मन्ननुमातनुहि ज्योतिषा" इति ॥ ३ ॥

"जनिष्यमाणा" इत्यजातेषु ॥ ४ ॥

अजातेषु—जनिष्यमाणेषु पुत्रेषु असाविति पदस्थाने "जनिष्यमाणा" इति। तथाच—"तन्तवे मा ज्योतिषा जनिष्यमाणा अनुमातनुत ज्योतिषा" इति बहुवचनं कृत्वा वाचयेद्यजमानम् ॥ ४ ॥

जातेष्वजातेषु च पुत्राइत्येव सत्रेषु ॥ ५ ॥

सत्रविषये जातेषु अजातेषु जनिष्यमाणेषु च "तन्तवे मा ज्योतिषा पुत्रा अनुमातनुत ज्योतिषा" इति तन्त्रेण सकृद्वाचयेत् न यथाज्येष्ठं पृथक् पृथगित्यर्थः ॥ ५ ॥

वषट्कृते हारियोजनस्य यथेतमपरया द्वारा निष्क्रामन्तो जपेयुः "सोमेहानुमेही"ति ॥ ६ ॥

हारियोजनस्य हविषः। अवयवलक्षणाऽत्र षष्ठी। तदवयवे वषट्कृते वषट्कारेण हुते सर्वेऽपि यथेतं-यथाऽऽगतम् अपरया (दक्षिणेनौदुम्बर्या गत्वा) पश्चिमया द्वारा निष्क्रामन्तः "सोमेहानुमेही"त्यादि यजुर्जपेयुः मन्त्रोयथा—"ॐ सोमेहानुमेहि सोम सह सदस इन्द्रियेण" इति ॥ ६ ॥

"सुभूरसी"त्यादित्यमुपातिष्ठेरन् ॥ ७ ॥

"सुभूरसी"त्यनेन यजुषाऽऽदित्यमुपतिष्ठेरंस्त्रयोऽपि ॥ ७ ॥

अस्तमितश्चेद्गार्हपत्यम् ॥ ८ ॥

चेत् यद्यादित्योऽस्तमितोऽस्तंगतः स्यात्तदोक्तेन यजुषा गार्हपत्य-(१)मुपतिष्ठेरन्। कोऽस्य विषयः? षोडशिवाजपेयौ, अन्यस्मिंश्च कालातिक्रमे ॥ ८ ॥

आग्नीध्रीये द्वे आहुती जुहुयु-"रपां पुष्पम्" इति पूर्वां, स्वाहाकारेणोत्तराम् ॥ ९ ॥

आग्नीध्रीयेऽग्नौ द्वे आहुती जुहुयुर्गत्यानुपूर्व्येण "अपांपुष्पम्" इत्यनेन यजुषा पूर्वामाहुतिज्जुहुयात्स्वाहाकारेणैवोत्तराम्(२) ॥ अत्राग्नि-

(१) "आदित्यो वाऽस्तं यन्नग्निमनुप्रविशती"ति श्रुतेः। गार्हपत्यं शालामुखीयम् ॥

(२) होमे स्वाहाकारस्य निसर्गसिद्धत्वात्तत्कथनमवधारणार्थमित्येवं व्याख्यातम्।

स्वामिनः—अथाहुती इति द्विवचनेन सिद्धं किमिदं संख्याग्रहणन्द्वे इति ? । उच्यते नियमार्थम् । उक्तं ह्यनेन "हिरण्यमल्पीयोभोगादाग-च्छेदौदुम्बर्यामाश्लेषयेदाग्नीध्रीये वा जुहुयात्" ( २।८।२५-२६ ) इति । तस्य हिरण्यस्यायं होमकालः । याऽसौ द्वितीयाहुतिस्तस्यामेव हिरण्यं प्रक्षिप्य जुहुयादिति ॥ ९ ॥

हारियोजन्योनाम धाना द्रोणकलशे भवन्ति तासामुद्गाता प्रथम आददानः "समुपहूता भविष्याम" इति ब्रूयात् ॥१०॥

हारियोजन्य इति संज्ञा धानानां, द्रोणकलशे ताः स्थापिता भव-न्त्यध्वर्युभिः सोममिश्राः । तासान्धानानामवयवमुद्गाता प्रथमः(१) पूर्वमाददानो गृह्णन् "समुपहूता भविष्यामः" इति ब्रूयात् ॥ १० ॥

तथेतरौ ॥ ११ ॥

यथोद्गाता कुर्यात्तेनैव विधिनेतरौ प्रष्टी कुर्याताम् ॥ ११ ॥

उन्नेतर्युपहवमिष्ट्वा "हारियोजनस्य ते" इति । "तिरोऽह्न्यस्य"(२) इत्यतिरात्रे, यथाधीतं वा सर्वत्र, द्विरुपघ्राय पश्चादाहवनी-यस्यान्तःपरिधि निवपेयुः(३) ॥ १२ ॥

"उन्नेतरुपह्वयस्व" इत्येवमनुज्ञाप्य "हारियोजनस्य ते" इति धाना द्विरुपघ्राय पश्चादाहवनीयस्योत्तरवेदिकस्याग्नेरन्तःपरिधि धाना निव-पेयुः(३) । अथ यद्यतिरात्रः स्यात् तदा "हारियोजनस्यत" इति मन्त्रे "स्तुतस्तोमस्य शस्तोक्थस्य" इत्यस्यानन्तरं "तिरोऽह्न्यस्य" इति पदं प्रक्षेप्तव्यं, सन्धिचमसभक्षणमन्त्रे तथैवाम्नानात् । तत उत्तरेषु सर्वे-ष्वपि भक्षेषु तत्पदं प्रयोक्तव्यन्तेषां सर्वेषां तिरोऽह्न्यत्वात् । पूर्वेद्युरभि-षुतः सोमोऽपरेद्युर्हूयमानोरात्र्या तिरोहितोऽह्नि हूयमानत्वात् "तिरो-ऽह्न्य" इत्युच्यते । अथवा (४)सर्वत्र यथाधीतमेव हारियोजनभक्षण-मन्त्रः । यद्यप्यतिरात्रे हारियोजनस्तिरोऽह्न्यः । तथापि तद्भक्षणमन्त्रे तिरोऽह्न्यस्येत्यनाम्नानान्न प्रयोगः । मन्त्रोयथा—"ॐ हारियोजनस्य ते

( १ ) अत्रामःसुः ( पा. ७।१।३९ ) "कालाध्वनोरत्यन्तसंयोगे ( पा० २।३।५ ) इति ह्यत्र द्वितीया प्रथमशब्दः पूर्वकालवचनः ॥

( २ ) "तिरोअह्न्यस्ये"त्यसंहितः पाठोद्राह्यायणीये तद्भाष्ये च दृश्यते ॥

( ३ ) पितॄनुद्दिश्य क्षिपेयुः "पितृदानं निवापःस्यात्" इत्यमरः ॥

( ४ ) अतिरात्रे चानतिरात्रे-च द्विरुपघ्राय आहवनीयस्य पश्चिमप्रदेशे परिधी नामभ्यन्तरतोनिवपेयु र्नाग्नौ इत्यग्निस्वामिभाष्यम् ॥

देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य योऽश्वसनिर्गोसनिर्भक्ष स्तस्योपहूत उपहूतस्य भक्षयामि' इति ॥ १२ ॥

अनुप्रहृतेषु भस्मान्ते ॥ १३ ॥

यदि पूर्वमेवाग्नौ परिधयोऽनुप्रहृताः प्रक्षिप्ता भवन्ति तदा भस्मनोऽन्ते समीपे धानाः निवपेयुः । "अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽति मनोहरे" इति विश्वप्रकाशः ॥ १३ ॥

अप उपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयु"र्देवकृतस्य" इत्येतत्प्रभृतिभिरिकारान्तैः ॥ १४ ॥

उपधानाद्यनन्तरम् अपः उपस्पृश्य स्पृष्ट्वा ( आचम्य ) एकैकमष्टावष्टौ शकलानि खण्डानि आहवनीये प्रहरेयुः प्रक्षिपेयुः । "देवकृतस्ये"त्येतत्प्रभृतिभिः । इकरान्तैरिति मन्त्रान्तज्ञापनार्थन्तेन "देवकृतस्यैनसोऽवयजनमसि" इत्येवमेव । नात्रस्वाहाकारः पाठाभावात् । केचित्तु बौधायनसूत्रे पाठात्स्वाहाकारं कुर्वन्ति ॥ मन्त्रोयथा—ॐ देवकृतस्यैनसोऽवयजनमसि, पितृकृतस्यैनसोऽवयजनमसि, मनुष्यकृतस्यैनसोऽवयजनमस्यस्मत्कृतस्यैनसोऽवयजनमसि, यद्दिवा च नक्तञ्चैनश्चकृम तस्यावयजनमसि, यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि, यद्विद्वाꣳसश्चाविद्वाꣳसश्चैनश्चकृम तस्यावयजनमस्येनसएनसोऽवयजनमसि ॥ १४ ॥

सकृदेव सर्वाण्युत्तमेनेति शौचिवृक्षिः ॥ १५ ॥

सर्वाणि अष्टावपि शकलानि सकृदेव मन्त्राष्टकमुच्चार्योत्तमेनान्तिमेन मन्त्रेण प्रक्षिपेयुरिति शौचिवृक्षिराचार्य आह ॥ १५ ॥

"अप्सुषोमा"नाम चमसाश्चात्वालदेशेऽद्भिः पूर्णास्तेषु हरितानि तृणानि प्रास्तानि भवन्ति ॥

"अप्सुषोमा" नाम चमसाश्चात्वालसन्निकृष्टे देशे एकधानावशिष्टाभिरद्भिः पूर्णा अध्वर्युणा स्थापिता भवन्ति । तेषु हरितानि तृणानि दूर्वादीनि प्रास्तानि प्रक्षिप्तानि भवन्त्यध्वर्युणा ॥ १६ ॥

ततः किमित्यपेक्षायामाह—

ते स्वं चमसं पर्युपविश्या"प्सु धौतस्ये"त्यवमृश्य जपेयुः ॥ १७ ॥

ते उद्गातारः स्वंचमसं (१)परि स्वकीयचमससन्निधावुपविश्य

---

( १ ) अत्र लक्षणे०" ( पा० १।४।९० ) परिः कर्मप्रवचनीयस्तद्योगे चमसमिति ( पा. २।३।८ ) द्वितीया ॥

अवमृश्य दक्षिणेन पाणिना स्पृष्ट्वा "ॐ अप्सुधौतस्य देव सोम नृभिः सुतस्य" इति यजुर्जपेयुः ॥ १७ ॥

"मधुमन्तमि"ति पाणीनुपजिघ्रेरन् ॥ १८ ॥

"ॐ मधुमन्तम्भक्षंकरोमी"त्यनेन यजुषा ते स्वपाणीन् स्वहस्तान् उपजिघ्रेरन् ॥ स्वेषाम्पाणीनामाघ्राणङ्कुर्युः ॥ १८ ॥

"शमद्भ्य" इत्युदञ्चं चमसान्निनयेयुः ॥ १९ ॥

"ॐशमद्भ्य ओषधीभ्य" इत्यनेन यजुषा उदञ्चम् उदङ्मुखं चमसं कृत्वा तत्स्था अपोभूमौ निनयेयुः क्षिपेयुः ॥ १९ ॥

"कामे"त्यभ्यात्ममावर्त्तेयुः ॥ २० ॥

"कामे"त्यनेन यजुषा अभ्यात्मम् अभिमुखमात्मनश्चमसमावर्त्तयेयुः। पदव्यत्यय आर्षः । आवर्त्तेरन्निति द्राह्यायणीये पाठः । स च साधीयान्वृतेरात्मनेपदित्वात् । मन्त्रो यथा "ॐकाम कामस्म आवर्तय" इति ॥ २० ॥

"ऊर्गि"त्युरःसु पाणीन्निदधीरन् ॥ २१ ॥

"ॐ ऊर्गस्यूर्जम्मयि धेहि" इत्यनेन यजुषा उरःसु वक्षःस्थलेषु स्वेषु पाणीन्करान्निदधीरन् स्थापयीरन् ॥ २१ ॥

"प्राणसोमे"ति मुख्यान्प्राणानभिमृशेरन् ॥ २२ ॥

"ॐ प्राणसोमपीथे मे जागृही"त्यनेन यजुषा मुख्यान् मुखेभवान् "शरीरावयवाद्यत्" (पा० ५।१।६) इति यत्प्रत्ययः । प्राणान् इन्द्रियाणि अक्षिणी कर्णौ नासिके चाभिमृशेरन् स्पृशेयुः ॥ अत्रापि पदव्यत्यय आर्षः ॥ २२ ॥

आग्नीध्रीयङ्गत्वा दधिभक्षं भक्षयेयुरसमुपहूय "दधिक्राव्ण" इति ॥ २३ ॥

आग्नीध्रीयपरिश्रितङ्गत्वा असमुपहूय समुपह्वानं परस्परानुज्ञानम(१) कृत्वैव "दधिक्राव्णोऽकार्षमि"त्यनया ऋचा दधि भक्षयेयुः । अश्वालम्भनमालभेत इत्यादिवदिहापि प्रत्ययार्थमात्रविवक्षा द्रष्टव्या(२) ॥ मन्त्रो यथा—"ॐदधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत्" इति ॥ २२ ॥

इति द्वितीयस्यैकादशी कण्डिका ॥ २ ॥ ११ ॥ * ॥

---

(१) सर्वे भक्षाः समुपह्वानपूर्वका विहितास्तदिह भूयस्त्वं गृहीत्वा प्रवर्त्तेत तस्य प्रतिषेधोऽसमुपहूयेति ॥

(२) अयमर्थः । "निमूलसमूलयोः कषः" (पा० ३।४।३४) इत्यारभ्य णमुल्येभ्य उक्तस्तत्र भक्षतिर्नास्तीति "कषादिषु यथाविध्यनुप्रयोगः" (पा० ३।४।४६) इति न प्राप्नोति ॥ तथापि—आर्षप्रयोगसंग्रहायात्र णमुल् इति ॥

## अथ द्वादशी कण्डिका—

"अग्निष्टपती"त्यवभृथसाम ॥ १ ॥

"अग्निष्टपति" इत्यवभृथसाम तत्काले गायेत् । अवभृथं यज्ञं (तत्स्थानं ) गच्छतां रक्षोविनाशाय यत्साम तदवभृथसामेत्युच्यते ॥१॥

कथमित्यपेक्षायामाह—

तस्याऽऽवृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः ॥ २ ॥

तस्यावभृथसाम्न आवृद्बुद्धिः यथा प्रथमस्य प्रवर्ग्यस्य साम्नः। अयमर्थः । तस्य स एव गानप्रकारः यथा प्रथमविहितप्रवर्ग्योद्वासन साम्नोगानम् । "पश्चात्तिष्ठन्नध्वर्युप्रेषित"स्त्यग्नायिरि"ति गायेत्" (१-६-१) इत्यादिना यदुक्तन्तत्सर्वमिहापि कार्यमिति ॥ २ ॥

सर्वे ऋत्विजो निधनमुपेयुः ॥ ३ ॥

तत्र प्रवर्ग्योद्वादसनसाम्नि प्रपर्ग्योपयुक्तानामेव (घर्मोपयुक्तानामेव) साम्नां निधनवचनम् इह तु सर्व एव षोड़शर्त्विजो यजमानः पत्नी च तस्यावभृथसाम्नः (१)निधनमुपेयुः । "पुरुषः पुरुषोनिधनमुपैती" ति श्रुतेः ॥ ३ ॥

इष्टाहोत्रीयमभिषेचनीये ॥ ४ ॥

राजसूये अभिषेचनीयेऽहनि इष्टाहोत्रीयमवभृथसाम स्यात् ॥ ४ ॥

"समस्ये"ति वा ॥ ५ ॥

"समस्य मन्यवे, विशः" इत्येतस्यां गीयमानमवभृथसाम वा स्यात्। इत्यभिषेचनीये इष्टाहोत्रीयं विकल्पयति ॥ ५ ॥

अश्वत्रिरात्रे नानाऽऽवभृथान्यहानि ॥ ६ ॥

अश्वमेधोऽश्वत्रिरात्रः । तस्मिन्स्त्रीण्यप्यहानि पृथक्पृथगावभृथानि अवभृथस्नानयुक्तानि भवन्तीति केषाञ्चिदध्वर्यूणां सूत्रम् ॥ अत्राग्निस्वामिनः । उक्तमहीनेषु दधिभक्षान्तान्यहानि प्रागुदयनीयादतिरात्रादिति च ( २।१२।१४+१५ ) अयमश्वत्रिरात्रे विशेषोनानावभृथान्यहानीति। नाना पृथगित्यर्थ इति ॥ ६ ॥

तेषां प्रथमस्य "सनादग्न"इत्यवभृथसाम ॥ ७ ॥

तेषामाश्वमेधिकानामह्नां प्रथमस्याह्नः "सनादग्ने" इत्यवभृथसाम स्यात् । अवभृथसामग्रहणं तत्र साममात्रं, न कृत्स्नोऽवभृथ इति ॥७॥

यद्वा "उविश्पतिरि"ति द्वितीयस्य "अग्नायिरि"तिवा ॥ ८ ॥

---

( १ ) तथाच तस्येति पूर्वसूत्रादिहानुवर्त्तते ।

यद्वा "ॐउविश्पतिः" इत्येतत्साम द्वितीयस्याह्नोऽवभृथसामेति, प्रकृते "त्यग्नायि"रिति वा । तृतीयस्याह्नः प्राकृतमेव, सामविशेषावचनादित्यवगन्तव्यम् ॥ ८ ॥

अवभृथेष्टौ संस्थितायाम् । "अवभृथनिचुम्पुण निचेरुरसि निचुम्पुणाव देवैर्देवकृतमेनोऽयासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि" इत्यप उपस्पृश्य त्रिरभ्युक्षेरन् ॥ ९ ॥

अवभृथेष्टौ संस्थितायां समाप्तायाम् "संस्था स्थितौ चरे नाशे व्यक्तिसादृश्ययोरपि" इति विश्वप्रकाशः । "अवभृथ निचुम्पुणे"त्यादिना यजुषा अपः उपस्पृश्य अवभृथेष्टिसाधनभूतास्वप्सु स्नात्वा त्रिरभ्युक्षेरन् । "क्रियाभ्यासे सकृन्मन्त्रः" इत्युक्तम् । अत्र धन्वी । उपस्पर्शनं स्नानम् तत्समन्त्रकं, तूष्णीमञ्जलिना त्रिरभ्युक्षेरन(१) । केचित्तु विपरीतमाहुरिति ॥ ६ ॥

आदित्यमुपतिष्ठेरन "उद्वयन्तमसस्परिज्योतिः पश्यन्त उत्तरं स्वः पश्यन्त उत्तरन्देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तममि"ति ॥ १० ॥

अभ्युक्षणानन्तर—"मुद्वयन्तमसः" इत्येतदादिना यजुषाऽऽदित्यमुपतिष्ठेरन् ॥ १० ॥

अस्तामितश्चेदाहवनीयम् ॥ ११ ॥

आहवनीयमौत्तरवेदिकम् । उपतिष्ठेरन्नित्यनुवर्त्तते ॥ विशेष उक्तः (१।११।८ सू०) ॥ ११ ॥

तस्मिन् समिध आदध्युः "एधोऽस्येधिषीमही"ति प्रथमाᳬ "समिदसि समेधिषीमही"ति द्वितीयाम् । "यदेनश्चकृमा वयं यद्वान्यकृतमारि मा । अनया समिधा वयᳬसर्वन्तदवमृज्महे"(२) इति तृतीयाम् ॥ १२ ॥

तस्मिन्नाहवनीये सर्वे समिधः आदध्युः "एधोऽस्ये"त्यादिभिर्यथा सूत्रितैर्मन्त्रैः । अत्राग्निस्वामिनः । तस्मिन्निति किमर्थमुच्यते ? अधिकृत एवाहवनीय इति।उपस्थिते चानुपस्थिते च तस्मिन् समिध आदध्युरेव। अन्यथा तस्योपस्थाने सत्येव समिदाधानं स्यादिति ॥ १२ ॥

---

(१) अभ्युक्षणन्निर्मन्त्रकमेवेति तद्भावः ॥

(२) अत्र "समजृक्ष्महि"ति द्राह्यायणीये पाठः । अर्थैक्यमत्र ॥

तमेवोपातिष्ठेरन्--

"अपो अद्यान्वचारिषं रसेन समगन्महि ।

पयस्वानग्न आगमन्तम्मा सꣳसृज वर्चसा" इति ॥ १३ ॥

तमेवाहवनीयम् "अपोअद्ये"त्यादिना मन्त्रेण उपतिष्ठेरन् । अपृशब्देन सोममुपचरति सोममिष्ट्वा भक्षयन्ति । तमेवेति प्रकृतावधारणम्॥ आदित्यस्य च समुपस्थानमुक्तमेवेत्याहवनीयोपस्थानमुक्तमनेन ॥ १३ ॥

प्रागुदयनीयादतिरात्रा"दप्सुषोमान्त"महः सत्रेषु ॥ १४ ॥

सत्रेषु प्रागिति अन्त्यवर्ज्जं सर्वाण्यहानि "अप्सुषोमा"(१)न्तान्येव स्युः । अन्त्येऽहनि प्रकृतिवदाहवनीयोपस्थानं तं सर्वं कुर्युरिति । उदयनीयादतिरात्रात्पूर्वाणि यान्यहानि तेषु दधिभक्षादिकर्मशेषोन भवति ॥ अहरिति जातावेकवचनम् ॥ १४ ॥

दधिभक्षणान्तमहीनेषु ॥ १५ ॥

"प्रागुदयनीयादि"ति वर्त्तते । तथाच अहीनेषु अहर्गणसाध्यसुत्याकेषु । अन्त्यवर्ज्जन्दधिभक्षान्तान्येवाहानि स्युः ॥ १५ ॥

यावन्त्यहानि राजानं भक्षयेयुस्तावत्स्वब्राह्मणायोच्छिष्टं न दद्युरद्भिर्वाप्रोक्ष्य दद्युः ॥ १६ ॥

यावन्त्यहानीत्यत्यन्तसंयोगे ( पा० २।३।५ ) द्वितीया । राजानं सोमम् । अयमर्थः । सोमपानदिवसेषु सर्वेऽप्यृत्विजः ब्राह्मणव्यतिरिक्तायोच्छिष्टं न दद्युः । यद्यवश्यम् अब्राह्मणाय ( राजन्याय वैश्याय वा ) देयन्तदाऽद्भिः प्रोक्ष्य दद्युरिति ॥ किमिदमुच्यते ? श्रुत्यन्तरेषु दृष्टं राजन्यवैश्ययोः सोमभक्षाभावो भक्ष्यविशेषाम्नानात् । ततोऽदानमेव सर्वथा श्रेय इत्यभिप्रायः ॥ १६ ॥

तदेषश्लोकः--

"सोममेतत्पिबत यत्किञ्चाश्नीत ब्राह्मणाः ? । माऽब्राह्मणायोच्छिष्टं दात माऽपात्सोममसोमपः ॥" इति ॥ १७ ॥

तमेवार्थमनुवदति "सोममेतदि"त्यादिश्लोकेन ब्राह्मणम् ॥ अयमर्थः । हे ब्राह्मणा ऋत्विजः ! सुत्यादिवसेषु यत्किञ्चान्नं भुञ्जीध्वं तत्सर्वं सोममेव यूयं पिबत । सोमपानमेव तदिति अब्राह्मणेभ्यः क्षत्रियादिभ्य उच्छिष्टं मा दत्त । किमर्थमिति चेत् ? अत्रोक्तम् "मापात्सोममसोमपः"

---

( १ ) तावदन्तमेव कर्मात्रोपदिश्यते ॥

इति। असोमपः सोमपानानर्हः क्षत्रियादिर्म्मापात्-मा सोमं पिबत्वित्येव-मर्थमिति। दाननिषेधोऽयं प्रकरणात्क्रत्वर्थः ॥ १७ ॥

एवं परिक्रामभ्ं सर्वक्रतुषु विद्यात्सर्वक्रतुषु विद्यात् ॥ १८ ॥

एवम् "ऋत्विगार्षेयोऽनूचान" (१)इत्युपक्रम्य ( १।१।७ ) यावदेत-दनुक्रान्तं तत्सर्वक्रतुषुविद्यादित्यतिदेशोऽयम्। अन्तेवाक्याभ्यासोज्योतिष्टोमप्रकरणसमाप्ति (२)द्योतकः॥ १८ ॥

इति श्रीमल्लाट्यायनश्रौतसूत्रव्याख्यायां "सरला"ख्यायां मुकुन्दशर्म्मकृतायां द्वितीयप्रपाठकस्य द्वादशी कण्डिका सम्पूर्णा प्रपाठकश्चायं समाप्तः ॥ १२ ॥ * ॥

( षष्ठः पटलः )

( इत्येषज्योतिष्टोमान्तोभागः )

शा०के वाणयुगाष्टभू ( १८४५ ) परिमिते मासे सहस्यर्जुने-पक्षे, नागगुरौ परेश-कृपया पूर्णाकृतिर्मामिका ॥ अग्निष्टोममखस्य सूत्रनिवहे लाट्यायनीये म-ता विज्ञानां प्रियशिष्यबोधनकृते भूयात्समानां शतम् ॥ १ ॥

---

( १ ) अत्राग्निस्वामिनः योऽयं "मन्त्रविधिश्चादिग्रहणेने"त्येतदादिविधिः परिक्रान्त एतं सर्वक्रतुषु जानीयात्। ननूक्तः सर्वक्रत्वधिकार इति तत्किमिदं पुनरुच्यते सर्वक्रतुषु विद्यादिति ? उच्यते-अन्तप्रज्ञापनार्थम्। कथम् ? अथ विध्यव्यपदेशे सर्वक्रत्वधिकार" ( १-१-१ ) इति। एतदादिर्विधेरयमन्त इति एतं सर्वक्रतुषु विद्यादिति ॥ अपर आह—सर्वक्रतोरधिकारः सर्वक्रत्वधिकार इति। सर्वक्रतुर्ज्योतिष्टोमः। कुतः ? श्रुतेः। "एष वा प्रथमोयज्ञानामि"त्युक्त्वा "यथा वा इदमग्नेर्यातादग्नयोविह्रियन्त एवमेतस्मादप्यन्ये यज्ञा विह्रियन्ते"इत्युक्त्वाऽऽह "योहि त्रिवृदन्यं यज्ञकतुमापद्यत स तन्दीपयती"ति एतदाद्युक्त्वाह "एतद्यदाहुरेकोयज्ञइत्येतद्धि सर्वे ज्योतिष्टोमा भवन्तीति। एतद्विधानमापद्यमानाः सर्वे,ज्योतिष्टोमा भवन्तीति सर्वक्रतुषु ज्योतिष्टोमः। तदादावेव सर्वक्रत्वधिकार" इति ज्योतिष्टोमाधिकारः। तेषां पुनरुक्तदोषोनास्ति। एतं ज्योतिष्टोमविधिं सर्वक्रतुषु विद्यात् अधिकविधेश्च प्रत्याहारं कुर्यादिति ॥

( २ ) द्राह्यायणीये "एषज्योतिः ॥ १९ ॥ सर्वेकामाः सर्वेकामाः ॥ २० ॥" इति सूत्रद्वयमाधिकं पठ्यते, सर्वक्रतुषु विद्यादिति च नाभ्यस्यते। तत्राद्यस्य एष सर्वक्रतूनां प्रकृतिभूतोज्योतिष्टोमोऽस्माभिरनुक्रान्त इत्यर्थः। द्वितीयस्य अस्य ज्योतिष्टोमस्य फल स्वर्गपुत्रपश्वन्नादयः सर्वे कामा इति। नित्यस्यैवार्थिसंस्तुतस्य ज्योतिष्टोमस्य कामसंयोगोऽयमिति ॥ ज्योतिष्टोमोऽग्निष्टोमभेदः सप्तसंस्थोहि सः ॥

॥ श्रीः ॥

# अथाग्निष्टोमसोमयज्ञसंबन्धिभूतलदृश्यम् ।

यज्ञानां हृदयाकाशो द्विजातीनामलङ्कृतिः ।

अथर्ववेदसर्वस्वमग्निष्टोमोऽयमुद्धृतः ॥ १ ॥

# अथाग्निष्टोमालेख्यसूचीपत्रिका—

प्राचीनवंशमण्डपः ( का० श्रौ० सू० ७ अ० १ कं० २०—२२ सू० )

गार्हपत्यः ( का० श्रौ० सू० ४।७।८ )

आहवनीयः ( का० श्रौ० सू० ४।८।१९ )

प्राकृती वेदिः ( का० श्रौ० सू० २।६।१-१० ) श० ब्रा० १ कां० २ अध्या० ३ब्रा० )

दक्षिणाग्निः ( अन्वाहार्यपचनः ) ( का० श्रौ० सू० ४।८।२० )

उत्करः ( का० श्रौ० सू० २।६।१२ )

महावेदिः ( का० श्रौ० सू० ८।३।८-११ ) ( श० ब्रा० ३।कां० ५ अध्या० १ ब्रा० )

उत्करः ( का० श्रौ० सू० २।६।१२ )

चात्वालः ( का० श्रौ० सू० ८।३।१४ )

उत्तरवेदिः ( का० श्रौ० सू०।५।३।३२-३६ )

यूपः (का० श्रौ० सू० ६।१।१६-३५)(श० ब्रा० ३।६।४)(तै० सं० ६कां० ३प्र० ३अनु०)

शामित्रः ( का० श्रौ० सू० ६।४।१४ )

हविर्द्धानमण्डपम् ( का० श्रौ० सू० ८।४।५-२४ )

हविर्द्धाने (द्वे) ( का० श्रौ० सू० ८।४।५ )

खरः ( का० श्रौ० सू० ८।५।२९ )

उपरवाः ( का० श्रौ० सू० ८।४।२८ )

आग्नीध्रम् ( का०।श्रौ० सू० ८।६।१३ )

मार्जालीयम् ( का० श्रौ० सू० ८।६।२२ )

सदोमण्डपम् ( का० श्रौ० सू० ८।६।१७ )

ओदुम्बरी ( स्थूणा ) (।का० श्रौ० सू० ८।५।३१ )

धिष्ण्यानि ( कां०श्रौ०।सू० ८।६।१६-२२ )

आसन्दी ( का० श्रौ० सू० ७।१।२७-३४ )

स्नानशाला ( परिवृतम् )।( का० श्रौ० सू०८।७।१।२७, )

पत्नीशाला ( परिवृतम् )।का० श्रौ० सू१ ७।१।२५,।७।२।२१ )

अतिरिक्तपदार्थास्तु श्रौतसूत्रभाष्यतत्तत्पद्धतिभ्योऽवसेयाः॥

# अथेदमप्यत्राकलनीयम्—

अस्य कालः-“वसन्तेऽग्निष्टोमः” ( का० श्रौ० सू० ७।१।४ ) इति ।

अयमेकाहः । अहीनः । सत्रमिति भेदात्त्रिविधः । तत्र एकेनाह्ना साध्यसुत्याकर्म्मकः ( सोमलताकण्डनम् ) एकाहः । द्वित्रैरहोभिरित्येवं द्वादशभिरहोभिः साध्यसुत्याकर्म्मकः ( सोमलताकण्डनम् ) अहीनः । पक्षं मासं संवत्सरं वेत्येवं सहस्रवर्षपर्यन्तं योऽनुष्ठीयते तत्सत्रम् । इह सव्वँत्सरशब्दोदिनपरोऽपि ( मी० द० ६ अ० ७ पा० १३ अधि० ३१—४० सू० )

सर्वेषां सोमसंस्थानां यज्ञानां प्रकृतिरेषोऽग्निष्टोमः । तथाच श्रुतिः—

“अग्निष्टोममग्र आहरन्ति । अग्निमुखं वा अग्निष्टोमः । यज्ञमुखमेवाक्रम्य सर्वमाक्रमते” । ( तै० सं०१ कां० प्रपा० ) इति । अग्निष्टोममन्त्राः शुक्लयजुः संहितायां चतुर्थाऽध्यायमारभ्याष्टमाध्यायस्य द्वात्रिंशत्कण्डिकापर्यन्तमाम्नाताः । एतस्याङ्गमग्नीषोमीयपशुयागः । सोमपात्राणि द्विविधानि ग्रहाः स्थाल्यश्च । तत्र दारुमया ग्रहाः । मृन्मय्यः स्थाल्यः । अथर्त्त्विजः—

“षोड़शत्विर्जोब्रह्मो-द्गातृ-होत्र-ध्वर्यु-ब्राह्मणाच्छंसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्र-च्छावाक-नेष्ट्रग्नीत्-सुब्रह्मण्य-ग्रावस्तु-दुन्नेतॄन् वृणीते” ( का०श्रौ० सू० ७-१-६ ) इत्येवमादि ॥

श्रीपातु

# अथ नवोपहारश्लोकाः—

## ❁ श्रीप्रमल्लदमीवतीचरितम् ❁

(१)जयत्यवनिजापदाम्बुजरजोऽब्जजोयन्मुहुर्निभालयति भालयत्यघभिदे सदेवासुरम् ।
सुभासुग्महर्दिवञ्जगदिदन्दिगीशानरम् सुरञ्जयति सञ्जितारिनिकुरम्बकानम्बकान् ॥ १ ॥

(२)जयत्यखिलभूसुरार्चितपदा सवित्री श्रियो-
धियोर्ज्जितजनाचिता निमिनृपालसल्लालिता ॥

---

(१) अवनिजापदाम्बुजरजः श्रीसीताचरणारविन्दरेणुर्जयति सर्वोत्कर्षेण वर्त्तते। यथाहुः-"लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरञ्जयन्ति। यानि प्रणाममिलितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥१॥ इति ॥ अनेन स्वावधिकोत्कर्षविशिष्टबोधोद्देश्यकव्यापाररूपा नतिराद्येयते। वैशिष्ट्यञ्च स्वप्रकारकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन। बोधोद्देश्यकत्वञ्च बोधेच्छाजन्येच्छाविषयत्वम् ॥ यद्रजः अब्जजोब्रह्माऽपि "धाताब्जयोनिर्द्रुहिणः" इत्यमरः। अहर्दिवमहन्यहनि अहनिचदिवाचेति द्वन्द्वेऽत्राचसमासान्तः (पा० ५।४।७७) मुहुर्निभालयति-प्रीत्यामृशमीक्षते। "निभालप्रीतिदर्शने" (चु० प०) (आकृतिगणत्वात्) तथाचोक्तं "बहुलमेतन्निदर्शनम्" इति ॥

यद्वा—ब्रह्मविद्यारूपत्वात्तस्यास्तत्पदरजसोभृशमीक्षणन्तस्य (ब्रह्मणो) युज्यतएव। तथाचोक्तं स्कान्दे (के. खं. अ. ८) "जनकस्य गृहे साक्षाद् ब्रह्मविद्या भविष्यती"ति। अत्र भविष्यतीत्यस्य जनिष्यत इत्यर्थः। "यागात्स्वर्गोभवती"त्यत्र यथा। ततश्च सुभासुरमतिशोभनं तद्रजः। सदेवासुरं-देवैरसुरैश्च सहितमिदं-परिदृश्यमानं शास्त्रेणाक्ष्णा च जगदघभिदे दुःखाद्यपनोदनायाऽहर्दिवमहन्यहनि भालयति भाले करोति। तिलकयतीति यावत्। अत्र "कर्णयत्याभरणमि"तिवत् "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे"-ति (ग० सू०) णिज्वाहुलकात्सप्तम्यन्तादपि। इष्ठवद्भावाच्च टिलोपः (पा० ६।४।१५५) ॥ "अघंपातकदुःखयोरि"ति विश्वः ॥ अथचाम्बकान्-अम्ब! इतिकायतः(शब्दायमानान्) "कैगै शब्दे" (भ्वा० प०) अस्मात् कृतात्वात् (पा-६।१।४५) "सुपी" (पा० ३।२।४)ति योगविभागात्के आतोलोपः (पा० ६।४।६४) दिगीशान्दिक्पतीनिन्द्रादीनपि अरं झटिति "लघु क्षिप्रमरन्द्रुतम्" इत्यमरः। अत्र "कालाध्वनो०" (पा० २।३।५)रिति द्वितीया। शीघ्रादिशब्दानाङ्कालाल्पपरत्वाभिधानात्। "क्लीबे शीघ्राद्यसत्त्वे स्यादि-"ति चामरः ॥ सुखेन रञ्जयत्यनुरक्तान्करोति। किम्भूतान्? सञ्जितारिनिकुरम्बकान्। सम्यग्जितमरीणां शत्रूणां निकुरम्बकं समूहः येषान्तांस्तथाभूतान् ॥ "स्त्रियान्तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्" इत्यमरः। स्वार्थेऽत्रकः ॥ १ ॥

(२) अथ कविर्म्मिथिलान्नमस्करोति। या मिथिला ब्रह्मविद्यायास्तद्रूपायाः श्रीसीतादेव्याः उक्तस्कान्दस्मृतेः। यद्वोपनिषत्प्रतिपाद्यायास्त्रयीतत्त्वभूतायावशब्दतोऽर्थतश्चतद्रूपायाः निखिलदर्शनादिरूपाया वा प्रसूत्पत्तिस्थानं (जनयित्री प्रकाशिका वा) भवति। वाचस्पति-मण्डन-कुमारिल-गङ्गेश-पार्थसारथि-प्रभृतीनामत्रैवाविर्भावात्। अतएव श्रियः

सितामितजलाऽऽवृता हिमगिरिप्रदेशे स्थिता ।
जितारिनिचया च या भवति ब्रह्मविद्याप्रसूः ॥ २ ॥

सीतारूपाया महालक्ष्म्याः सम्मृद्धेर्वा सवित्री उत्पादिका "राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि" इति लक्ष्मीमुपक्रम्य विष्णुपुराणस्मरणात । उर्वरा-(सर्वसस्याढ्या-)त्वा-च। किम्भूता? अखिलभूसुरार्चितपदा-अखिलैर्देशविदेशैरपि भूसुरैर्भूदेवै-(ब्राह्मणै-)रर्चितम्पूजितं पदं स्थानं यस्याः सा "पदं व्यवसित-त्राण-स्थान-लक्ष्माऽङ्घ्रि वस्तुषु इत्यमरः ।" यद्वा अखिलभुवि समस्तमिथिलाप्रदेशे ( प्रतिग्रामम्प्रायोवृत्त्या, प्रतिपत्तनञ्च ) अवच्छेदकत्वमत्र विषयत्वलक्षणं सप्तम्यर्थः । सुरैर्देवैः । अथवा अखिलाचासौ भूसुरार्चितपदाचेति कर्म्मधारयः समासः । भूसुरार्चितपदेति तु यथापूर्वमेव व्यधिकरणपदो बहुव्रीहिः ब्राह्मप्राणयेति तदर्थः । पुनश्च-धिया बुद्ध्या ऊर्जिता बलिताः प्राणिता वा ये जनाः बुद्धिबला-बुद्धिजीविनोवा ( विद्वांसोऽन्ये च ) तैः राचिता-सर्वतो व्याप्ता । छन्नेतियावत् । "आचितः शकटोन्मेये पलानामयुतद्वये । पुंलिङ्गः संगृहीतेऽपिच्छन्नेऽपि स्यात्त्रिलिङ्गकः" इति मेदिनी ॥ "ऊर्ज्जबलप्राणनयोः" ( चु० प० ) कर्त्तरि क्तः ॥ अकर्म्मकत्वात् ( पा० ३।४।७२ ) । पुनश्च—निमिनृपालेन निमिनाम्ना जनकपूर्वजेनादि-(सर्वप्रथम-) जनकेन यद्वानिमिरिव (मनुष्यो)निमिः । अत्रेवार्थकनः ( पा० ५।३।९६ ) "लुम्मनुष्ये" (पा० ५।३।९८) इति लुप् । तथाभूतेन नृपालेन मिथिलेश श्रीलक्ष्मीश्वरसिंहेन प्रभुणा सं-सम्यक् लालिता । ईप्साविषयतामापादिता । "लल ईप्सायाम्" ( चु० आ० ) तस्माण्णयन्तात्कर्म्मणि क्तः । पुनश्च-सितैः स्वभावशुद्धैरतिविमलैः । यद्वा सितेवाऽचरन्दिरतिमधुरैरमितैरपरिच्छिन्नैर्जलैः (सर्वत्र सुलभैः) आवृता । सर्वत्रव्याप्ता । अनूपभूमित्वात्तस्या इति भावः । यद्वा सितं शुद्धममितमपरिच्छिन्नं च जलं यासान्ताभिः कौशिकी-गङ्गा-गण्डकीभिः पूर्व-दक्षिण-पश्चिम-दिग्विभागेषु आवृता वेष्टिता । एतेन जलगिरिदुर्गाऽऽवृतत्वं मिथिलायाआवेदितं भवति ॥ अत एवेयं तीरभुक्तिसमाख्याभाग्भवति । तीरेषु तिसृणां नदीनामुक्तपूर्वाणां भुक्तिर्भोगः सीमापूर्तिर्यस्याः सेति तदर्थः । तथा च स्कान्दे-कौशिकी-गण्डकी-गङ्गा-तीरेषु भुक्तिभाग्यतः । तीरभुक्तिरतः ख्याता मिथिला हिमवद्वनम्" इति । तथा च—हिमगिरिप्रदेशे-हिमवद्वनस्य दक्षिणभागे स्थिता । सामीप्यलक्षणाऽत्र सप्तमी । "वटे गावः सुशेरते" इति वत । एतद्विशेषणेन शैत्यमप्येतदीयजले निरावाधमुक्तम्भवति ॥ पुनश्च जिता अभिभूता अरिनिचयाः शत्रुसमूहा यत्र सा । "जि अभिभवे" ( भ्वा० प० ) कर्म्मणि क्तः । सर्वदाऽरिभिरजेया । अत एवास्यां मथ्यन्तेरिपवोऽस्यामिति नामनिरुक्तिपूर्वकं "मिथिलादयश्च" ( उ० १।५७ ) इति शाकटायनीयौणादिकसूत्रव्याख्यानन्दीक्षितचरणाः प्राहुस्ततश्च जितारि निचयेत्यनेन मिथिलापदस्यैव निरुक्तिरत्रबोध्या । याञ्च दृढीकरोति निमिनृपालसंलालितेति विशेषणम् । अन्येत्वाहु-"मिथिर्नाम निमीराजा तेनात्ता मिथिलाऽभवदि"ति । तन्मते "लाऽऽदाने" (आ० प०) अस्माद्दाहुलकात्कर्मणि क्विपा क्लिष्टं साधनं बोध्यम् । अतएवेयं जयति-सर्वोत्कर्षेण वर्त्तते । अत्र भूमण्डलस्थान्यप्रदेशादुत्कर्ष उक्त एव । अमरावत्या अपि व्यतिरेकोऽस्याअर्थत उक्तोभवति । इयं हि ( मिथिला- ) भूरखिलैः भूचरैः खेचररपि मूर्त्या सुरैरर्चितपदा । श्रियोलक्ष्म्याः ( सीतायाः ) सम्पदश्च सवित्रीत्येवम् । ब्रह्मविद्या प्रसूत्वञ्चास्या विशेष इति पूर्णोव्यतिरेकः । यथा चालङ्कारिका आमनन्ति "व्यतिरेको-विशेषश्चेदुपमानोपमेययोरि"ति ॥ २ ॥

(१)यस्या गोकुलपालनाऽर्चिततरश्रीः सत्यभामाऽऽदृतः ।
सद्वृन्दावनकौतुकी द्विजपतिप्रीतिं समुद्दीपयन् ॥
धुन्वञ्जिह्मगचित्तमञ्चितबलोवंशं वहन्नुज्ज्वलम् ।
कुर्वन्नर्जुनकीर्त्तिमुद्भृतधरोलक्ष्मीश्वरोऽभूत्पतिः ॥ ३ ॥
यस्याज्ञानतिवर्त्तिनोहि मिथिलोपान्तेऽपि(२) भूमीश्वराः ।
सद्भावङ्गमिताः परे क्षितिभुजोमन्त्रप्रतीक्षा भृशम् ॥
सम्राट्संसदि (३)सव्विँभावितमतौ प्रौढिम्पराभीयुषो–
वाचोयुक्तिपटोरदभ्रकरुणागारस्य नैष्टाऽपरः(४) ॥ ४ ॥

---

( १ ) यस्या मिथिलायाः पतिरधीश्वरोलक्ष्मीश्वरस्तदाख्यः । श्लेषमहिम्ना विष्णुरेवाभूदित्यन्वयः । अपरोऽपि राजा "नाविष्णुः पृथिवीपतिः" इति अध्यस्तविष्णुभावोजनैर्भवति । अयन्तु साक्षादेव विष्णुर्यतोऽसौ गो० श्रीः । गवां कुलस्य समूहस्य "कुलंजनपदेगोत्रे सजातीयगणेष्वपि । भवनेचतनौक्लीब"मिति मेदिनी गोकुलस्य च पालनेनार्चिततरा अतिपूजिता श्रीः सम्पत् ऐश्वर्यं-( मीश्वरत्व-)ञ्च यस्य सः । एवं० स० तः । सत्यं च भाश्च मा च ताभिः । पक्षे सत्यभामया आदृतः । आदरविषयीकृतः । स०० की । सतां सुधियां वृन्दस्य समूहस्यावने रक्षणे, पक्षे सति समीचीने वृन्दावने, कौतुकी विलासवान् । द्वि००न् । द्विजपतीनां सद्ब्राह्मणानां द्विजरतेर्गरुडस्य च प्रीतिं समुद्दीपयन् सव्वँर्द्धयन् । ( शत्रन्तमेतत्क्रियाविशेषणम् ) "दन्तविप्राण्डजा द्विजा" इत्यमरः । धु००त्तम् । जिह्मगस्य कुटिलगतेः पिशुनस्य, पक्षे कालियस्य (नागविशेषस्य ) चित्तं परमर्म्मविभित्सां धुन्वँस्तिरस्कुर्वन् । इदमपि पूर्ववत्क्रियाविशेषणमेव । "जिह्मगोमन्दगे सर्पे" इति विश्वप्रकाशः । मन्दगः पिशुनः । अ०लः । अञ्चितं पूजितं बलं सामर्थ्यँ सैन्यं वा यस्य सः । पक्षे अञ्चितः पूजितोबलोबलभद्रोज्येष्ठत्वात् । येन सः । अत्र नामैकदेशग्रहणे नामग्रहणं भीमोभीमसेन इतिवत् । वं०लम् । उज्ज्वलं सर्वदोषरहितं सकलगुणोपेतञ्च वंशं खण्डबलाख्यं कुलं, पक्षे वेणुम् ( मुरलीं ) । "वंशोवेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च" इति विश्वप्रकाशः । वहन्निर्वहन्धारयंश्च । अर्ज्जुनां धवलां-( निसर्गशुभ्रां निष्कलङ्कां ) कीर्त्तिं "वलक्षो धवलोऽर्जुनः" इत्यमरः । पक्षे अर्जुनस्य पाण्डवस्य कीर्त्तिं कुर्वन्सम्पादयन् । ( इदमपि क्रियाविशेषणम् ) उ००रः उदधिकं भृता पोषिता धरा पृथ्वी येन सः । पक्षे उदूर्ध्वं भृतो धृतोधरोगोवर्द्धनोयेन सं० । "धरा धरित्री धरणी" इति "अहार्यधरपर्वताः" इति चामरः । "डुभृञ्धारणपोषणयोः" ( जु० उ० ) कर्म्मणि क्तः । अत्र सर्वत्र "धातुसम्बन्धे प्रत्ययाः" ( पा० ३ । ४ । १ ) इति भूते लटः शता बोध्यः ॥ ३ ॥

( २ ) अपिरत्रानन्तरस्य माण्डलिकस्य प्रत्यनीकत्वं ( विरुद्धाचरितत्वं ) स्वाभाविकमप्येतस्मिन्प्रतिषेधति । यत्र हेतुरत्नपदं वक्ष्यमाणोऽत्र श्लोक एव बोध्यः ॥

( ३ ) सं-सम्यक् विशेषेण भाविता भावनाविषयीकृता मतयः सभ्यानां यत्र भवन्ति तस्यां सम्राट्संसदि "कौन्सिल"पदाभिधेयायाम् ॥

( ४ ) अपरोऽन्यो महाराजादिः तस्यतथाभूतस्य यस्य नेष्ट । यमीशितुमतिवर्त्तितुं नाशकत् । अत्र "अधीगर्थदयेशाङ्कर्म्मणि" ( पा० २।३।५२ ) इतीशतेः कर्म्मणि शेषत्वेन विवक्षिते षष्ठी बोध्या ।

(१) भूदेवोद्धृतितत्परः करलसच्चक्रः स्फुरन्मित्रदृक् ।<br>
लोकानां स्थितिकल्पकः प्रियगुणः सन्नन्दकोविक्रमी ॥<br>
ईहाधीनजयोमतोद्धवसमारम्भश्च गोरक्षण-<br>
व्यासङ्गी जवनार्दनः सुकृतिभिर्लक्ष्मीश्वरोऽमानि यः ॥ ५ ॥

विद्वांसः कवयोनृपान्वयभुवोमल्लास्तथा शिल्पिनः ।<br>
तन्त्रीवादकगायकप्रभृतयश्चान्यत्कलाकौशलाः ॥<br>
येनानाय्य यथोचिताधिकलसद्वृत्त्या गुणग्राहिणा ।<br>
सत्कारैः सुखिताः सदैव सदसः शोभां समातेनिरे ॥ ६ ॥

सक्तः सत्कृतिसम्भृतौ सुकृतिनां, भक्तोगुणानां भृशम् ।<br>
शक्तोधर्मधुरां विधर्त्तुमधिकं त्यक्तः सदाऽसूयया ॥

---

(१) भुवोदेवानाञ्च, पक्षे भूदेवानां ब्राह्मणानामुद्धृतौ उद्धारे तत्पर आसक्तः । "ब्राह्मणोऽस्त्री द्विजात्यग्रजन्मभूदेववाड़वाः" इति। "तत्परे प्रसितासक्ताविग्"ति चामरः । करो॰ राजग्राह्यभागो हस्तश्च "बलिहस्तांशवः कराः" इत्यमरः । चक्रं राष्ट्रं सुदर्शनञ्च । "चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः" इति मेदिनी । अयं हि महाभागः स्वबाल्ये सम्राट्स्थापितैरेतद्राज्यसंरक्षणाधिकृतैस्संवर्द्धित॰स्य करस्य बहोः कालात्प्रजाभिरनुद्धृतस्य कोट्यधिकस्य विमुक्तिं ताभ्यः प्रदाय तासान्निरतिशयामाशिषं लब्धवानासीत् । मित्रं सुहृत् । मित्रः सूर्य्यश्च । "मित्रं सुहृदि मित्रोऽर्के" इति विश्वप्रकाशः । लोकानाञ्चतुर्दशभुवनानां जनानाञ्च "लोकस्तु भुवने जने" इत्यमरः । "मर्यादाधारणास्थितिरिग्"ति च ॥ गुणोभीमः । शौर्यादिश्च । "गुणोमौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्याग-शौर्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु ॥ शुक्लादावपि वच्याञ्चे"ति मेदिनी ॥ सूदःपाचकोभीमोविराटगृहे गुप्तवासावसरे तत्क्रियाकरणात् । अत्र गुणप्रिय इति वक्तव्ये "वा प्रियस्य"( पा० २।२।३५ वा० ) इति प्रियस्य पाक्षिकः पूर्वनिपातः । सन् साधुः । सत्सु साधषु नन्दकोहर्षकस्तन्नामा खड्गोयस्य सः। सतां सुधियान्नन्दकोहर्षकः । कुलपालकोवा "नन्दकोहरिखड्गे स्याद्धर्षके कुलपालके ।" इति मेदिनी । विना-पक्षिणा-गरुड़ेन क्रामति गच्छति तच्छीलः । अत्र "सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० ३।२।७८ ) इति णिनिः । "नोदात्तोपदेशस्य मान्तस्यानाचमेः" (पा० ७।३।३४) इत्युपधावृद्धिनिषेधः । पक्षे विक्रमोऽतिशक्तिता सोऽस्यास्तीत्यर्थं मत्वर्थीयः ( पा० ५।२।११५) इनिप्रत्ययः । "विविष्किरपतत्रयः" इति पक्षिपर्यायेऽमरः । "विक्रमस्त्वतिशक्तता" इति चामरः ॥ जयः पार्षदविशेषो विजयश्च । उद्धवो यादवविशेषः । उत्सवश्च, "उद्धवोयादवभिदि महे च क्रतुपावके" इति मेदिनी । गवां धेन्वादीनां गोः सरस्वत्याः पृथिव्याश्च रक्षणे व्यासङ्गी-आसक्तिविशेषवान् । "गौर्नादित्ये बलीवर्द्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्वाणलोमसु" इति केशवः ॥ जवनस्य कालजवनस्य । जवनानांम्लेच्छानां ( तुरुष्काणां ) च । अर्दनः पीड़कः । अर्दतिर्गत्यर्थोऽप्यत्र धातूनामनेकार्थत्वात्पीड़ने प्रयुक्तः । जनार्दन इति वत् । अतएव सुकृतिभिः पुण्यवद्भिर्योलक्ष्मीश्वरोविष्णुरमानि मतः । कर्म्मणि लुङ् । "सुकृती पुण्यवान्धन्यः" इत्यमरः ॥

व्यक्तः संसदि नीतिनूतनदृशा, रक्तः प्रजामण्डले ।
व्यासक्तः श्रुतसंग्रहे दृढपरिष्वक्तः श्रिया योऽभ्यभात् ॥ ७ ॥
शौर्यस्यायतनं परैरधिरणं स्पर्द्धापरैरर्ज्जुनः ।
क्रौर्यस्यास्पदमुद्धतैर्निरुपमे(१) कालः खलैर्निग्रहे ॥
गाम्भीर्यस्य निधिर्विवेकचतुरैः पाथोनिधिः कोविदै-
रौदार्यस्य खनि,र्वनीपकजनैश्चिन्तामणिर्योमतः ॥ ८ ॥
यस्यार्त्ताभयनित्यदाननिपुणः पुण्यप्रपाकोद्भवो-
भूयोऽर्थव्ययसाधितोन सुकरस्ताव(२)न्महीपैः परैः ॥
औन्नत्यङ्कलयन्निव प्रतिदिनं,लब्धु' नभः प्राङ्गणम् ।
कीर्त्तिस्तम्भनिभश्चकास्ति विशदः स्थेयां(३)श्चिकित्सालयः ॥ ९ ॥
यस्योत्तुङ्गसुसप्तभूमिकमहाप्रासादशैलाग्रगा ।
घण्टाघोषमुखा सुदूरतमगानप्याऽऽदिशन्ती स्थितिम् ॥
लक्ष्मीभर्त्तुरमुष्य तत्र, नितरां सत्स्वर्णदण्डाश्रिता ।
आनन्दादिकवागगा विजयते शश्वत्पताकाऽनिशम् ॥ १० ॥
येन स्वप्रपितामहेन रचितं छत्रेश्वरीमन्दिरम् ।
जीर्णं वीक्ष्य नवं दृढं सुरुचिरन्निर्म्मापितं सद्धनैः ॥
स्वावासान्तिकगा च प्रत्नृपतिक्लृप्ता,तथा दीर्घिका ।
स्वारामान्तरगा नवा व्यरचि सत्सोपानबद्धा पुनः ॥ ११ ॥
सोऽयं तर्क्कनभोऽग्निभू(१३०६)परिमितेऽसद्वत्सरे यावरे ।
त्यक्त्वा लोकमिमं विकुण्ठभवनं प्रापाधिमार्गं (४)शुचौ ॥
पक्षे, श्रीगणनायकस्य तिथिके(५)लोकाधिसर्वँद्धके ।
किन्तु प्राक्तनपुण्यतोननु विशां(६)सद्योऽभवत्तत्पदे ॥ १२ ॥
तस्याशेषगुणाकरस्य मिथिलाधीशस्य सर्वेश्वरी-

---

( १ ) अस्य निग्रहे इत्यनेनान्वयः ।

( २ ) साकल्येन । "यावत्तावच्च साकल्ये" इत्यमरः ॥

( ३ ) स्थिरतमः । अधिदरभङ्गं "राजहस्पताल्" इति नाम्ना प्रसिद्धः । एवमपरोऽनेकविधो विद्यालयोऽपि काशी-दरभङ्गा-रहिकाऽदिषु स्थानेषु । विद्यापदेनाङ्गली भाषाऽपि । "राजस्कूल" नाम्ना तदालयश्चकास्ति । यत्राशुल्कं जना अधीयतेस्म ॥

( ४ ) मार्गे मासि । शुचौ शुक्ले । "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते" इति विश्वप्रकाशः ॥ सिते शुक्ले ।

( ५ ) कुत्सार्थेऽत्र कन् ( पा० ५।३।७४ ) । अत्र हेतुगर्भं विशेषणं लोकाधिसर्वँद्धक इति ।

( ६ ) प्रजानाम् । "द्वौ विशौ वैश्यमनुजौ" इत्यमरः ॥ मनुजः प्रजैव । "विशां पतिरि"त्यत्र यथा ।

पत्पद्माद्दितसन्मतेरवरजःश्री५मान्महेशाभिधः(१) ॥
नाम्नैवाजनि भेदभाग् वसुमतोविख्यातसत्कीर्त्तिमान् ।
शास्तीमां मिथिलामदभ्रमतिमान् सद्धर्म्मबद्धादरः ॥ १३ ॥ ( युग्मम् )
योगङ्गाऽविरतप्रवाहणकृतेऽभून्नव्यभागीरथः(२) ।
प्राहुश्चोत्कलवासिनोद्विजवरा यन्धर्मरत्नाकरम् ॥
प्राप्तं येन हि जी० सि० आइ० इ० पदम् के० वी० इ० चेत्यादिकम्(३) ।
सम्राजोभृशतोषितात्प्रतिनिधेः साहाय(४)केनाञ्जसा ॥ १४ ॥
यस्मै च स्पृहयन्ति भारतभुवः कल्याणनिघ्नान्तराः (५) ।
यस्मात्संहृषितान्तरा बुधवरा यस्याऽऽशिषस्तन्वते ॥
यस्मिन्नीतिनिधौ विधाविव बुधाः के नाम नाधुन्वते ।
मूर्द्धन्यः स्वा,न्प्रकृते हिते बुधनुते, (६)स क्ष्मापतिर्म्मे गतिः ॥ १५ ॥
तस्य(७) श्री५लक्ष्मीश्वरस्यातिकीर्त्तेर्जी० सी० आई० ई० पदैरञ्चितस्य ॥
ज्येष्ठा पत्नी सत्प्रतिष्ठा गरिष्ठा पातिव्रत्येनातिशेतेऽनसूयाम्(८) ॥ १६ ॥
या विद्वत्सुकुलाग्रजन्मवसतौ(९) ग्रामे रसाढ्ये जनिम् ।
लेभे, स्वेकहलान्ववायमहितात्सिन्धोर्व(१०) षट्कर्म्मणः ॥

---

( १ ) श्री ५ मद्रमेश्वरसिंह बहादुरः ।

( २ ) भगीरथ एव भागीरथः स्वार्थिकः प्रज्ञाद्यण् ( पा० ५।४।३८ ) आदिवृद्धिः ॥

( ३ ) आदिना धर्मरत्नाकर डिलिट् इत्यादि बोध्यम् ॥

( ४ ) अत्र भावे वुञ् (पा० ५।१।१३२) आदिवृद्धिः । सहायतया । हेतावत्र तृतीया ( पा० २।३।२३ ) ॥

( ५ ) कल्याणे निघ्नमन्तरमेवान्तरं मनोयेषां ते । "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि चे"ति । "अधीनोनिघ्न आयत्त" चामरः इति ॥

( ६ ) बुधैः स्तुते । "णु स्तवने" ( अ०प० ) कर्मणि क्तः ॥

( ७ ) पूर्वोक्तस्य जगत्प्रसिद्धस्य च । "प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दोयच्छब्दोपादानं नापेक्षते" इति हिमम्मटः ॥

( ८ ) अत्रिपत्नीम्पतिव्रतामूर्द्धन्याम् । यद्विषयेच प्रसिद्ध्यति पद्यमदोऽस्मदीयपरमगुरुचरणानां महामहो० राजारामशास्त्रिणाम्—विधवोद्वाहशङ्कासमाधिनामके ग्रन्थे—

पातिव्रत्यमयेन याऽऽत्ममहसा ब्रह्माच्युतेशान् क्षणात् ।
चक्रे प्राकृतबालकानिव ददौ भूकन्यकायै मुदा ॥
रक्षोऽन्धङ्करणाङ्करागमपि या सद्धर्मसम्पादिनी ।
सा नोऽत्रेर्गृहिणी तनोतु कुशलन्नाम्नाऽनसूया सती ॥१॥ इति ।

( ९ ) विद्वांसः सुकुलाः कुलीना येऽग्रजन्मानोब्राह्मणास्तेषां वसतौ वासस्थाने । 'वसतिः स्याद्वस्थाने यामिन्याञ्चनिकेतने" इति विश्वप्रकाशः ॥

( १० ) इवार्थेऽत्र व शब्दः "व वा यथा तथेवैवं साम्ये"इत्यमरः ॥ षट्कर्म्मणोब्राह्मणात् । दानं प्रतिग्रहोऽध्ययनमध्यापनं यजनं याजनञ्चेति षट् कर्म्माणि तेषाम् ॥

गङ्गायां(१)सुकृतिप्रपूजितपदायामिन्द्रनाथाह्वयात् ।
शा०के भूनवसप्तभू-(१७९१)-परिमिते चैत्रे सिते खावनौ(२) ॥ १७ ॥
औदार्य्यार्जवसद्गुणैरुपचितां यां वीक्ष्य तातः स्विकाम् ।
कन्यान्दातुमना विकुण्ठभवनं प्राप्तोवरीतुं हरिम् ॥
तावत्खण्डवलाकुले बुधनुते जन्माऽऽप्य लक्ष्मीश्वरोऽ-
वाञ्छीत्तां परिणेतुमाप्तवचसा विज्ञाय योग्यां निजाम् ॥ १८ ॥
भूयः सद्व्रतचर्य्ययाऽन्यजनुषि श्रीशोययाऽभ्यर्थितः ।
पातिव्रत्यरिरक्षिषापरवशोऽङ्गीकृत्य जन्माग्रहीत् ॥
लोकोद्धारकृतेऽवनीपतिपदम्प्रापाधिवैदेहकम्(३) ।
लग्ने सद्गुणभूषिते बुधमतेनोपायत(४) स्वाङ्गणे ॥ १९ ॥
तां सद्वत्सरपञ्चकल्पवयसं(५) स्वां प्रेयसीं सुश्रियम्(६) ।
शश्वद्भावभरैर्यया समधिकं जन्मान्तरेऽभ्यर्थितः ॥
लोकोद्धारकृतेऽवतीर्थ बहुधा संस्थाप्य धर्म्मं मुहुः ।
भक्तान्साधुजनान्स्वकं पदमदाद्य सिन्धुकन्यापतिः ॥ २० ॥ ( युग्मम् )
सोऽयं विश्वजनीनवृत्तिरपरञ्जन्माप्य भक्त्या भृशम् ।
सद्भावाऽऽहृतचेतसे समधिकं यस्यै स्पृहामग्रहीत् ॥
प्रादाच्छ्रीमिथिलेश्वरीपदमहो स्वभोगभाग्यन्निजम् ।
ह्यस्यै गुरुवर्गसेवनकृतेऽसंश्यानसत्संविदे(७) ॥ २१ ॥
यस्यास्तोषमवाप्य बान्धवजनस्तत्पूर्वमूढां महा-

---

( १ ) तन्नाम्न्यां, सिन्धुपत्नी च सुरसरित् ॥ आद्यात्र सुकृत्या।शोभनकर्मणा, द्वितीया च सुकृतिभिः पुण्यवद्भिः प्रपूजितपदा "सुकृती पुण्यवान्धन्यः" इत्यमरः ।

( २ ) दशम्याम् । खमाकाशम् ०। अवनी पृथ्वी १॥ अङ्कस्य वामागतिरिति तथा लभ्यते॥

( ३ ) मिथिलायाम् । अत्र विभक्त्यर्थेऽधिकरणेऽव्ययीभावः (पा० २।१।६) समासः ॥

( ४ ) उदूढवान् । अत्र "उपाद्यमः स्वकरणे" ( पा० १।३।५६ ) इत्यात्मनेपदम् । "विभाषोपयमने" ( पा० १।२।१६ ) इति सिचः कित्वान्मलोपः (पा० ६।४।३७ ) ॥

( ५ ) अत्र "ईषदसमाप्तौ कल्पदेश्यदेशीयरः" ( पा० ५।३।६७ ) इति कल्पप्प्रत्ययः॥३ विवाहसमयस्य "प्र मे पति यानः पन्था" इत्यादि मन्त्रपाठयोग्यतामात्रप्रयोजकत्वा-न्मनुना "ब्रह्मवर्चसकामस्य कार्योविप्रस्य पञ्चमे"इति पञ्चमवर्षस्योपनायकत्वस्मृते-र्द्विजकन्यानाञ्च विवाहेविधेरुपनयनतुल्यत्वस्मृतेश्चेति बोध्यम् ॥ तथाहि "वैवाहि-कोविधिः स्त्रीणामौपनायनिकः स्मृतः" इति याज्ञवल्क्यः स्मरति ।

( ६ ) शोभना श्रीः शोभा यस्यास्ताम् । पक्षेशोभनां श्रियं लक्ष्मीम् "श्रीवेशरचना-शोभाभारतीसरलद्रवे । लक्ष्म्यां त्रिवर्गसम्पत्तौ वेशोपकरणे मता" इति विश्वप्रकाशः ॥

( ७ ) असंश्यानाऽसङ्कुचिता सती साध्वी संवित् अध्यवसायोयस्यास्तस्यै । अत्र "स्योऽस्पर्शे ( पा० ८।२।४७ ) इति श्यैङोनिष्ठातस्य नः। संश्यानोवृश्चिकः। शीता-त्सङ्कुचितइत्यर्थ इति सि० कौमुदी । ततोनञ्समासः ॥

राज्ञीं नास्मरदञ्चितामपि गुणैर्लक्ष्मीश्वरस्य प्रभोः ।
सत्कार्येषु सहायतां बहुविधां स्वस्वाधिकारोचिताम् ।
यच्छन्त्या निरहङ्कृतेरतुलसत्प्रेमास्पदायाः सदा ॥ २२
यस्याः सद्गुणगौरवेण विजिता मश्वत्सपत्नी महा-
राज्ञी प्राज्ञतमाऽपि विग्नहृदया नावाप तुष्टिं मनाक् ॥
भर्त्तुः पादसरोरुहार्चनकृते कृत्वा कृतीर्नैकधाऽ-
प्यन्तेऽन्तःपरितापतो बहिरपि प्रादह्यताऽशेषतः ॥ २३ ॥
यस्यां भर्तृवियोगजाधिनिवहैर्दग्धान्तरायामपि ।
नाभूत्कर्मविपर्ययः क्षणमपि प्रज्ञाधिकायां क्वचित् ॥
धर्मार्थं सततं समुद्यतमतौ सद्राज्यसंरक्षणे-
ऽप्यग्रायामपि, भूमिदेवनिवहस्यार्थे ददत्यां धनम् ॥ २४ ॥
याऽङ्गे(१) भक्तजनार्त्तिहं पुरभिदं(२) द्रष्टुङ्कृता स्वैः समम् ।
श्री १०८ मन्तं छरमानुषाच्चिर्चतपदं तं(३) वैद्यनाथाह्वयम् ॥
श्रुत्वा प्राज्ञतमांश्च वृत्तिविकलान्सत्पाठशालां व्यधात् ।
यत्रागत्य पठन्ति भूसुरसुता देश्या(४) विदेश्या अपि ॥ २५ ॥
प्रोन्नत्यङ्कलयन्त्यसौ (५) कतिपयांश्चके विपश्चिद्वरान् ।
देशेस्वेऽपि विपश्चितां छमहतीं चक्रेऽपरान्तां (६)पुनः ॥
ग्रामे पूर्वबुधाश्रिते(७) सारिसवे, सद्राजभाषाविदोऽ-
प्यास्थत्ख्यातिमनोहरां छविपुलां तत्पाठशालामपि(८) ॥ २६ ॥
नाम्ना भर्तुरदभ्रपुण्यनिलयस्यागत्य यत्राऽनुज-
स्तस्य श्री ५ मिथिलामहीपरिवृढः शा० के शराऽग्न्यष्टकौ ( १८३५) ॥
नूत्नान्तामुदघाटयत्छमुदितस्तत्रोभयत्रापि स-
द्विधादानपरिष्कृतं वसुमतीमश्नोति(९) यत्सद्यशः ॥ २७ ॥(युग्मम् )

---

( १ ) अङ्गदेशे । ( २ ) त्रिपुरारिम् । ( ३ ) जगत्प्रसिद्धम् ॥

( ४ ) अत्र साध्वर्थे ( पा० ४।४।९८ ) "भवेच्छन्दसि" (पा०४।४।११०) इति सप्तम्यन्ताद्यत्प्रत्ययः । अस्यापि छन्दोबद्धत्वेन छन्दस्त्वस्याभ्युपगमात् ॥ छन्दसि विधीयमानमपि बाहुलकङ्कार्य्यङ्कविप्रयोगे गायत्रीप्रमुखे छन्दोऽभिधेये प्रवर्त्तत इति महाकवीनां राद्धान्तः ॥ अतएव "तन्तस्थिवांसन्नगरोपकण्ठे" इत्यादिमहाकविप्रयोगेषु छान्दसो लिटः क्वस्वादिरुदाहृतो रघुवंशादौ ॥ ( ५ ) वैद्यनाथसंस्कृतपाठशाला ॥

( ६ ) संस्कृतपाठशालाम् । अत्र सम्बन्धिपदं विपश्चितामिति । तथाच तेषां कृत इत्यर्थः । अस्य यत्रेत्यनेन द्वितीयश्लोकस्थेन सम्बन्धः ॥ अतएव युग्ममेतत् ॥

( ७ ) पूर्वैर्बुधैरपूर्वैर्वा बुधैराश्रिते ॥ अत्रैव हि म० म० भवनाथ-(आयाची-) मिश्र-ठक्कुरमिश्राद्य आसन् । ( ८ ) राजभाषापाठशालाम् ॥

( ९ ) व्याप्नोति "अशूव्याप्तौ" ( स्वा० उ० ) लट् वर्त्तमाने ॥

यस्यैतद्द्वितयस्य रक्षणकृते प्रादात्स्वगोत्रो(७०)न्मितम् ।
साहस्रन्धनमञ्चिता चिरमसौ(१)सम्राट् स्वकोषेऽञ्जसा ॥
येनैतन्नियतं प्रदानपरमं विद्याद्वयस्यास्पदम्(२) ।
बोभूयादिति सद्धियाऽतुलमतिर्यत्नात्समातिष्ठत(३) ॥ २८ ॥

एवन्तद्द्वितयान्तिकेऽतिसुचिरन्तञ्जीर्णपूर्वम्महा-
दीर्घं सद्विषजालयेन सहितं नूत्नं तडागं व्यधात् ॥
जीर्णोद्धारफलं श्रुतौ द्विगुणितं श्रुत्वा पराम्निर्वृतिम् ।
प्राप्ता, यन्निकषा(४) चकास्त्यतिमहान्पथा जनानन्दकृत् ॥ २९ ॥

या मध्येमिथिलं(५) लसन्मधुवनीसंस्थान आसीत्पुरा ।
भर्त्रा संश्रितवत्सलेन विभृता सत्पाठशालाऽपरा ॥
साहाय्येन, सुजीर्णतामुपगतान्तामप्यसौ वत्सला ।
दीनाना, सुरुमद्धनैः सुरुचिरान्निर्माप्य विद्भयोऽददात् ॥ ३० ॥

यत्राधीत्य चतसृषु(६)प्रथमतोऽन्त्यां श्रेणिमासादिताः ।
विद्यासु प्रथिता यशोभिरभवन्नन्तेवसन्तोमुहुः ॥
राजन्ते सुधियोऽ- सत्कृतिजुषोयस्या धनेनान्वहम् ।
पुष्टा, पाठनतत्पराः प्रमुदिता आशासते चाशिषः ॥ ३० ॥

भवत्या श्रीमत्या विलसदभिधेया(७) सुचरितै-
र्बभूवोद्भूतश्रीः सम्पदि दरभङ्गाऽऽदरपरा ॥
यदत्र प्रख्यातं भवनमुरुशिष्यैरुपचितम् ।
"सरस्वत्येकेडेम्य"भिधमतिहृद्यं सुमनसाम् ॥
विनश्यत्क्रीत्वा सद्धननिचयतोभूमिमसमाम्(८) ॥ ३२ ॥ ( युग्मम् )

---

( १ ) अस्य रक्षणकृत इत्यनेनान्वयस्तथा चानवरतैतत्प्रचारायेत्यर्थः फलति ॥ तदेवाह-येनेत्यादि ॥

( २ ) आस्पदं स्थानम् "आस्पदं पदकृत्ययोः" इति मेदनी । तत्र पदं स्थानम् ॥ "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि"त्यमरात् ॥

( ३ ) "आङः प्रतिज्ञायाम्" ( पा० १।३ २२ वा० ) इत्यात्मनेपदम् ॥

( ४ ) यस्यान्तिके ( समीपे ) "अभितः परितः समया निकषाहा प्रतियोगेऽपी"ति ( १।१।४।४९ , द्वितीया षष्ठ्यर्थे । "निकषाऽन्तिकमध्ययोः" इत्यमरः ॥

( ५ ) विभक्त्यर्थेऽधिकरणेऽव्ययीभावसमासः ।

( ६ ) अस्य विद्यासु इत्यनेनान्वयः। ताश्च "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती। विद्या ह्येताश्चतस्रश्च धर्मसंस्थितिहेतवः ॥ १ ॥ इतिस्मृत्योपनिबद्धाः। यद्वा "चतुष्पाठी" समाख्याख्यापका वेद-व्याकरण न्याय-ज्योतिष-मुख्याः ॥

( ७ ) दरस्य भयस्यभङ्गो विनाशो यस्यां सेति प्रशस्तार्था ॥

( ८ ) अतुलामुत्तमोत्तमामित्यर्थः। भूमिं क्रीत्वा सुदृढमगारन्निर्म्माप्य विनश्यत्तद्भवनं पुनरपि भवन्नामवलितं सत्प्रतिष्ठां सुस्थितिमापेदे प्राप्तमत्रकर्म्मणिलिट् । कर्तृपदं भवत्येति युग्मम् ,

विनिर्म्माण्यागारं सुदृढमुरुसत्प्रज्ञ(१) सुमतम् ।
प्रतिष्ठामापेदे पुनरपि भवन्नामनलितम्(२) ॥
सतीनां मूर्द्धन्या जयतु सततं साऽग्रभवती(३) ॥ ३३ ।
पुनर्यन्त्रागारं स्वधननिवहेनातिरुचिरम्
सुशिष्यावासार्थं सविध अथ नार्थादिवपुषः(४) ॥
विनिर्म्माण्याऽदात्तत्पतिमतमुपादाय सपदि ।
प्रसन्ना या प्रत्नं प्रविततटाकं सुरुचिरम् ॥
समुद्धार्याऽकार्षीद्-थनगरवास्तव्यसुमुदम् ,
दधाना,ऽऽरामान्तः सुविपुलतटाकञ्च महितम् ॥
विधाप्यान्यत्राथोऽतिरुचिरसुपुस्तालयमहो ।
स्वभर्तुर्नाम्नाऽसौ जननिवहसात्त्(५)कृतवती ॥ ३४ ॥ ३५ ॥ (युग्मम्)
अथ वाक्कीलजनौघे(६)मुख्यतरै-(७)श्चार्थिताऽधिदरभङ्गम् ।
न्यायालयस्य सविधे मुख्यतरावासमुत्तमं व्यदधात् ॥ ३६ ॥
या निजगुरुसु(८)कृतवृद्ध्यै तडागमेकं सुदीर्घमतिहृद्यम् ।
लक्ष्मणपुरेऽधिमिथिलं निरमापयदथ जनाशिषोलेभे ॥ ३७ ॥
सीतामढीपुरे या छात्रजनावासमर्थिता सुजनैः !
तन्नगरवासिमुख्यैरतिरमणीयं दृढं व्यदीधपत ॥ ३८ ॥
या निजसोदरनिलयाऽन्तिके "भडारिसम्" सुनामके ग्रामे ।
श्री१०८ मद्राणेश्वर्या व्यदीधपन्मन्दिरं दृढं स्वधनैः ॥ ३९ ॥
नानाशास्त्रपुराणसंश्रितकथाः श्रुत्वा बुधानां मुखात् ।
मत्वा ता भृशमर्थतोननु निदिध्यासाञ्चकाराञ्जसा ॥
निर्विण्णा प्रतिपक्षमर्थिनिवहे दानन्ददत्यास (९)सा ।
त्यक्त्वा तान्दरभङ्गिकामुरुयशा(१०) वारणसीमाययौ ॥ ४० ॥
या लभ्या चिरसंभृतेन तपसा यामाश्रयन्ते बुधाः ।
तीर्णोदुष्कृतसञ्चयात्प्रभवति प्राज्ञोयया सङ्गतः ॥

---

(१) उर्वी बह्वी सती प्रज्ञा बुद्धिर्येषां तेषां सुमतं सम्मतम् ।
(२) "महारानीलक्ष्मीवतीसरस्वतीएकेडेमी"त्येवम् ॥ अत्र भवत्या नामेति समासे "सर्वनाम्नोवृत्तिमात्रे पुम्बद्भावः" (पा० ६।३।३५) इति पुंस्त्वम् ।
(३) पूज्या । (४) नार्थशब्दादि वपुः स्वरूपं यस्य तस्य "नार्थबुक्" समाख्यस्य॥
(५) जनसमूहाधीनम् । "तदधीनवचने सातिः" (पा० ५।४।५४) इति सातिप्रत्ययस्तद्धितः । (६) उकीलजनसमूहैः ।
(७) "मुखतार" पदाभिधेयैः ॥
(८) मिथिलेशमहाराजरुद्रसिंहपुत्री भवानीदेव्याः पुण्यवृद्ध्यर्थम् ।
(९) आसेति बभूवेत्यर्थेऽव्ययम् ॥
(१०) उरु बहु यशोयस्यास्सा ॥ "वड्रोरु विपुलम्" इत्यमरः ।

यस्यै संस्पृहयन्ति दिव्यजनुषो यस्या अगस्त्योगतः ।
शोच, ञ्जहुसुताऽभवस्थिरतरा यस्या(१)वलाकात्सदा ॥ ४१ ॥
यस्यां भैरवभूपतिः सुकृतिने श्रेयः सदा दित्सति ।
प्रत्थास्यन्नुरुपापभृत्स्वगृहतो विघ्नेन संवार्यते ।।
यत्र श्रीगणनायकस्य कृपया निष्कल्मषा आसते ।
तन्निन्नाः सपदि प्रयान्ति सदनं मुक्तिप्रदा सा नृणाम् ।। ४२ ।।
यमोयस्या द्वारि प्रबलनिजदण्डं परिहरन् ।
धुनानोमूर्धानं स्वमिशपति तां जह्नुतनयाम् ।।
कृतार्थे तत्तीर्थे पुरहरपुरश्रीर्विदधी ।
समन्तात्ते कीर्तिर्हसति नु सती शाश्वकुलम् ।। ४३ ।।
प्रतिज्ञातं ज्ञातं क्वचिदपि न जातं विफलताम् ।
न कस्कः पुष्यन्तीमनुसरति हृष्यन्कृतिलताम् ।।
गुणैर्बद्धा स्वैरं चरति जनताऽऽसैः शवलताम् ।
न वाचोवाऽऽचारात्स्खलयसि वशिष्ठा (२)विमलताम् ।। ४४ ।।
ह्यमत्यत्रागत्य प्रतिदिनमसौ कृत्यनिवहं यथापूर्वं स्नानादिकमतिशयन्ती सुकृतिनः ।
प्रकुर्वाणा, दानैर्निरतिशयमानैश्च समतू–तुषद्विप्रान्नैकान्निभृतमनुगङ्गं प्रमुदिता ।।४५।।
दृष्ट्वा श्री१०८गिरिजागणेशललितं विश्वेशमृत्यादरात् ।
दत्त्वोपायनमस्य मङ्क्षु(३)पदयो,रापत्परां निर्वृतिम् ।।
नानाशास्त्रविपश्चितोऽथ प्रथिता येषां समज्ञा(४) भुवि ।
प्राप्यान्ते ह्यविमुक्तके पुरि पुरा तानप्यसावा(५)र्चिचत् ।। ४६ ।।
पुरासीद्या राज्ञी(६) निजकुल उदञ्चत्कृतिलता ।
सतीनां मूर्द्धन्याऽनुसुरधुनि(७) चक्रेऽत्र विततम् ।
स्वनाम्ना प्रासादन्तमथ पतितं वीक्ष्य जनता–
कृतेऽकार्षीन्नव्यं सपदि ननु भव्यं प्रमुदिता ।। ४७ ।।
वत्स्यन्त्यत्र विपश्चितोऽपि बहवोऽन्तेवासिनो मैथिलाः ।
मत्वा श्रीमिथिलेशितुः प्रियतमा नाम्ना स्वकेनाकरोत् ।।
देशान्तरात्समुपेत्य तीर्थधिषणा अन्येऽपि चात्रासताम् ।

---

( १ ) अत्र "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यकारलोपः ॥
( २ ) अतिशयेन वशिनीत्यर्थे इष्ठनि पुम्वत्त्वम् ॥
( ३ ) सपदि । "द्राङ्मङ्क्षुसपदि द्रुते" इत्यमरः ॥
( ४ ) यशांसि । "यशः कीर्त्तिः समज्ञा चे"त्यमरः ॥
( ५ ) प्रतिपुरुषन्दशराजतमुद्रा भोजनवस्त्रादिभिः ॥
( ६ ) "पद्मावती"ति पुण्याभिधाना ॥
( ७ ) गङ्गातटे मीरघट्टे काश्याम् ॥

कञ्चित्कालमि,ति प्रसीदति मनोहृष्ट्वाऽमुमेता(१)म्मुहुः।। ४८ ।।
दिष्टया(२) श्री१०८परमेशितुः पुरभिदः प्रीत्यै कृतीस्तन्वती ।
नैकान्भूमिसुराननाथमहिला अग्या श्रितान्बिभ्रती ।।
अन्नाच्छादनदानतः सुसमये तीर्थाश्रितान्ब्राह्मणान् ।
दानैर्नैकविधैः समर्चितवती भास्वत्समज्ञा(३) सती ।। ४९ ।।
या विश्वोपकृतिक्षमा निरधिकश्रद्धाभरेणादरात् ।
काश्यां विश्वजनीनवृत्तिरभरत्तं(४) विश्वविद्यालयम् ।।
मुद्राभिः खखखाग ७००० सम्परिमिताभी राजताभिः समम् ।
तत्संस्थापकमालवीयविबुधे ऽभ्यर्थिता सादरम् ।। ५० ।।
या श्रीरामपदारविन्दविलसत्स्वान्ता सतीतव्रतम् ।
स्वान्ते वात्र(५) नितान्तकान्तभवने संस्थाप्य निर्म्मापिते ।।
स्वे, सार्द्धन्धनसञ्चयैरनुदिनं तद्भोगशेषान्नतो-
विप्रांस्तर्पयते परश्शतमितान्त्सन्मैथिलानञ्जसा ।। ५१ ।।
सपत्नी भवत्या रमा सेवते(६) त्वाम्-सपत्नीधिया तां दरिद्राय दत्से ।।
भवत्या निदेशं परं न त्यजन्ती तमप्याश्रयन्ती सती सेवते त्वाम् ।।५२।।
दयां दीनेऽधीने तनयनयमेव प्रणयसि ।
कल्लोल्लासं काले कलयसि कृपालोऽविकलितम् ।।
गुणे पुण्या श्रद्धा न सुकृतिविरुद्धाऽपि सरणिः ।
यशस्ते नीरोकं(७) कमिह न हि लोकम्मदयति ।। ५३ ।।
यस्या यशश्चन्द्रिकया सितीकृतेऽवनीतले हंससमाश्चकासिरे ।
काका अपि प्रार्थितदानगौरवाधया जिता कल्पलता दिवं गता ।। ५४ ।।
यत्सोदर्य्यबुधः कलङ्करहितोऽकार्षीत्समुद्रांश्च(८)या ।

---

(१) अमुं प्रासादम् । एतामत्रागतानांतीर्थयात्तृणामन्येषां च मैथिलानाम् । अत्रेते· राङ्पूर्वाद्गत्यर्थात्क्विपि तुगागमोद्रष्टव्यः ॥

(२) सानन्दम् । "दिष्ट्या समुपजोषञ्चेत्यानन्दे" इत्यमरः ।

(३) भास्वन्ती शोशुभ्यमाना। समज्ञा कीर्त्तिर्यस्याः सा ॥ "यशः कीर्त्तिस्समज्ञा"चेत्यमरः ॥

(४) तं प्रसिद्धं (हिन्दू-) विश्वविद्यालयम् । अभरत्पोषितवती इत्यनेनान्वयोऽस्य॥

(५) इवार्थेऽत्र व-शब्दः । "ववायथातथेवैवं साम्ये" इत्यमरः ॥
स्वान्तञ्च मनः । "स्वान्तं हृन्मानसं मनः" इत्यमरः ॥

(६) कनिष्ठात्वात् ॥ पूर्वमियमुदूढापश्चाच्च राजलक्ष्मी, राज्याभिषेकस्य परकालिकत्वाद्रेतत्परिणयस्य च ततः प्राक्तनत्वमित्यनेनोक्तम्भवति ।

(७) निश्छिद्रम् । निष्कलङ्कमिति यावत् । "छिद्रं निर्व्यथनं रोकम्" इत्यमरः ॥

(८) मुद्राभिर्द्धननिचयैः सहितान् ॥ स्वानात्मीयान् ॥

स्वान्, कौटिल्यमदादयोऽमतगुणा यां नाश्रयन्ते क्वचित् ।।
श्रीलक्ष्मीश्वरसेवनादधिगता लक्ष्मीर्विनेया यया ।
यस्यै च स्पृहयन्त्यभूत्स्थिरतरा सार्थामभिख्यां व्यधात् ।। ९५ ।।
यस्या रक्षणमाप्य भूसुरवरा वारायणीमासते ।
यस्याः कीर्त्तिलता दिगन्तवितता स्वर्द्रु" पराक्रामत ।।
यस्यां शम्भुसुतोषणेन निभृतं काश्यां वसन्त्यो बुधाः ।
मोदन्ते समयेऽर्चिताः प्रभविता सा श्रीमती मे गतिः ।। ९६ ।।
अतोऽहमधुनाऽन्तिमे वयसि संश्रितस्त्वां पुन-
र्निवस्तुमविमुक्तकेऽत्र पुरि निर्वृतः सर्वतः ।।
विशोध्य(१)तनुमञ्जसाऽपचितिमेतकां(२) श्रद्धया ।
स्वकीयसुतमद्धिया परिगृहाण पुष्पाञ्जलिम् ।। ९७ ।।

इति श्री ५ मत्या महाराज्ञ्या लक्ष्मीवत्या मिथिलेश्वर्याश्चरितवर्णना-
त्मका नवोपहारश्लोकाः ।। १ ।। ❋ ।।

---

(१) अपराधिनं मां क्षमातिरेकेण काशीनिवासनेन चानुकम्प्येमां मामकीन्तनुं विशोध्येत्यर्थः ॥

(२) अनुकम्पायामल्पार्थेवाऽत्रकः ॥ तथा चानुकम्पितामल्पां वैतां पुष्पाञ्जलि-रूपामपचितिं पूजां गृहाणेत्यर्थः ॥ "पूजा नमस्याऽपचितिरि"त्यमरः ॥